

श्रीपरमात्मने नमः ।

# सनातनजैनग्रंथमाला ।

६

श्रीमदाचार्यवर्य-सोमदेवसूरिविरचिता

# शब्दार्णवचंद्रिका ।

## ( जैनेंद्रलघुवृत्तिः )

आगराप्रांतस्थ-टेहूग्रामनिवासिना

श्रीयुत श्रीलालजैनेन संपादिता ।

सा च

उस्मानाबादनिवासि-स्वर्गीयश्रेष्ठिवर्यगांधीकस्तूरचंद्रस्यात्मजबालचंद्रस्य स्मरणार्थं

काशीस्थ-भारतीयजैनसिद्धांतप्रकाशिनीसंस्थाया व्यवस्थापकेन

श्रीपन्नालालजैनेन

काशीस्थ-औदुम्बरनाम्नि मुद्रणालये प्रकाशिता ।

वीरनिर्वाणसंवत् २४४१ ख्रीष्टाब्दः १९१५ ।

प्रथमसंस्करणं

मूल्यं रूप्यकपंचकं ।

## सूत्रयितुश्चरितं ।

न्यायव्याकरणाद्यखिलशास्त्रांभोधिमथननिस्सारित**समाधिशतकजैनेंद्र**प्रभृत्यद्भुतग्रंथरत्नः स्वशेमुषीप्राखर्येखर्वितदुर्वादिनागनिनदः सततसुतपःश्रीसमालिंगितवदनसदनोऽन्वर्थाख्यो विभुः **पूज्यपादो** भूषयांचक्रे स्वावतारमाहात्म्येन **शकाब्द**चतुःशतंते **कार्णाटक**देशस्थ**कोलंगला**भिधं नगरं । वर्तते स्म जनकोऽस्य जात्या विप्रो नाम्ना च **माधवभट्टो** माता च देवीव **श्रीदेवी**। यदा चायं प्रभुर्निर्विण्य समाजग्राह संसारांतकरीं जैनीं दीक्षां, ययौ तदा गुरुदत्तया देवनंदीत्याख्यया ख्यातिं जगतीतले । तत् प्रमाणीकुर्वन्नास्ते निम्नस्थोऽयं श्लोकः ।

**यो देवनंदिप्रथमाभिधानो बुद्ध्या महत्या च जिनेंद्रबुद्धिः ।**
**स पूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं तदीयं ॥**

प्रभोरस्य मतिगतिप्राचुर्यप्रभावाज्जिनेंद्रबुद्धिर्देवसंदोहप्रपूजितपादयुगलत्वात्पूज्यपाद इति चाख्ये प्रसिद्धिं जग्मतुर्विद्वत्समाजे । परं मौलिकी तु पूर्वोक्तैव । संप्रतीयते तत् जैनेंद्रमहाव्याकरणस्य मंगलाचरणोच्चारिताद्यश्लोकश्लेषेन । तथाहि—

**लक्ष्मीरात्यंतिकी यस्य निरवद्यावभासते ।**
**देवनंदितपूजेशे नमस्तस्मै स्वयंभुवे ॥**

प्राक्प्रोल्लिखिताभिधायमलस्य ख्याताववतरंति श्रुतिदेशं भिन्नभिन्नाश्चाख्यायिकाः । समजनि स्वामिनोऽस्य महत्यारेका कदाचिज्जितघातिकर्मचतुष्टयत्वान्निखिलावबोधकतामधिगतस्य निर्मूलितारेकस्य जिनस्य साधितसर्वसत्त्वशंते सिद्धांते । तां दूरीकर्तुकामो निष्कामोऽयं महात्मा सततसमस्तावबोधकभास्करभानुविघटितासद्ज्ञानस्तोमे **विदेहा**ख्ये क्षेत्रे गगनेन गंतुं मतिं विदधे । जातश्च तत्र संदृश्य सार्वसर्वज्ञपादपद्मं समुन्मूलितसंदेहसंदोहः । विद्वत्ततिना तत एव समाख्यायि **जिनेंद्रबुद्धि**रिति नाम्ना । तत्कृतव्याकरणग्रंथश्च **शब्दार्ण**वेत्यपरनामसद्भावेऽपि **जैनेंद्रे**त्याख्यया । वीतरागस्यास्य चरणरजस्पर्शप्रभाववशीभूतं कालायसं कल्याणं कल्पते स्मातोऽधिगतवान् द्वितीयां पूज्यपादेति समाख्यामयं विभुः । श्रूयते चेदमपि यद्विदेहात्प्रत्यावर्तितस्य शरीरशोषणं सुघोरं तपस्तप्यमानस्यास्य विभोः सततनीरसभोजनस्वादनात् क्षुत्तृषाद्यनेकविधपरीषहसहनाच्च नेत्रद्वंद्वं स्वकार्यकरणसामर्थ्यराहित्यं गतं । कदाचित्समियायायं **वनवास**देशीयराजावासभूमि**वंकापुर**स्थं सुप्रसिद्धमाहात्म्यं श्री**शांतिनाथ**जिनभवनं । तत्र भगवद्भक्तिप्रवाहपरिप्लुतस्तथा स्तोतुमारभत येनास्याशु सकलसत्सरूपपदार्थदर्शनप्रवणं नेत्रद्वंद्वमजायत । ततश्च समुद्भूतसमस्तदेशपर्यटनशक्तिः कृतधर्मोपदेशकरणभक्तिः संचचाराखिलावनितलं, समुद्भासयन् जैनीं सत्स्वरूपपदार्थपंक्तिं, विघटयन् नानाजनजनितासज्ज्ञानांधकारं येन शतशः सहस्रशश्चासन्मार्गगामिनो मानवाः सन्मार्गमुररीकृत्य प्रतिपेदिरे कृतकृत्यतां । समुन्मूलितारातिवर्गो निष्कंटकिताधिराज्यो **गंग**कुलतिलकायमानो **दुर्विनीत**काभिधो राजाधिगम्य राजपीठं शशासेशवीय ४७८ तमसंवत्सरात् ५१३ तमाब्दपर्यंतं धरामिमां, स्वीचकार सोऽपि दुर्विनीतकोऽस्य शिक्षया सुविनीयतां ।

## रचितग्रंथाः ।

यदयं प्रधाति स्म न्यायव्याकरणकाव्यवद्यकाध्यात्माद्यखिलविषयसंसूचकाननैकान् ग्रंथान्, समनुमीयतेऽतोऽस्यासीदखिलतंत्रस्वतंत्रता । समुपश्लोकितं च केनापि—

**जैनेंद्रं निजशब्दभागमतुलं सर्वार्थसिद्धिः परा**
**सिद्धांते निपुणत्वमुद्धकवितां जैनाभिषेकः स्वकः ।**
**छंदः सूक्ष्मधियं समाधिशतकं स्वास्थ्यं तदीयं विदा-**
**माख्यातीह स पूज्यपादमुनिपः पूज्यो मुनीनां गणैः ॥**

प्रसिद्धिमनल्पामावहंति तद् प्रथितग्रंथेषु जैनेंद्रव्याकरणसर्वार्थसिद्धि ( तत्त्वार्थसूत्रटीका ) जैनाभिषेक-समाधिशतक-इष्टोपदेशाः । तर्कयंति च केचिद् बौद्धसंन्यासि**जिनेंद्रबुद्धि**कृतपाणिनीयसूत्र**काशिका**विवृतेरपि निर्मातृत्वमस्मिन् परं तन्नामसाम्याद् भ्रांतिमंतरा नास्त्यन्यद् । न हि दृश्यते सति स्वनिर्मितव्याकरणग्रंथे तद्विवृतिं विहायान्यव्याकरणविवृतिकरणेन तच्चिकीर्षापूरणं । को धीमान् विद्यमाने स्वद्रव्येऽन्यस्मादृणमावहेत् ।

## जैनेंद्रव्याकरणं ।

मोदयतींद्रचंद्राद्यष्टव्याकरणान्यतमं शब्दार्णवापराभिधं व्याकरणग्रंथमिदं स्वसर्वांगपूर्णत्वेन सर्वेषामेव संस्कृतसाहित्यज्ञातॄणां मनांसि । न हीदमुपलब्धान्यव्याकरणग्रंथसदृशं प्रलंबितसूत्रसूत्रितमिष्टिवार्तिकत्रुटिकादिसंसा-

धितकार्यं। विस्मयंते वीक्ष्यास्य रचनासौगम्यं वैयाकरणप्रधानामीशं सूत्रसूत्रणलाघवं च। वर्तते च तत एवाध
लिखिता ख्यातिः— **प्रमाणमकलंकस्य पूज्यपादस्य लक्षणं।**
**धनंजयकवेः काव्यं रत्नत्रयमकंटकं॥**

## संस्करणभेदः।

संलभ्यते भारतवर्षीयोत्तरदक्षिणप्रांतयोर्भिन्नभिन्नं संस्करणद्वयं। संति च तत्रोत्तरीयसंस्करणे पा सूत्रानुकारि खंडितावयवं सूत्रं वार्त्तिकेष्टिप्रभृतयश्च। परं ग्रंथकर्तुर्नाम मंगलाचरणमाद्यंतसूत्रमेवमन्या सूत्राणि चोभयोः समान्येव। संपद्यतेऽतो महान् संदेहो यत्कतरन्निर्मितमस्मद्भक्तिभाजनपूज्यपादपूज्यप न कतरच्चान्येन। नास्ति किंचित्प्रमाणं पूर्वाचार्यनिर्दिष्टमस्मत्समीपे येन शक्नुयाम सरलतया निर्णेतुं। यद्य विवादास्पदमेतत्तथापि तत्संस्करणयुगलनिरीक्षणतया पार्यतेऽवबोद्धुं। निरणायि स्वाल्पशेमुषीशक्तिवशंवदै रस्माभिर्वीक्ष्य तेऽपि संस्करणे यद्दाक्षिणात्यमेव गरीयस्तन्निर्मितं च। निर्णायकनिमित्तानि निम्ननिबद्धानि।

प्रथमं-सांप्रतिकधूमशकटमुद्रणालयप्रभृतिसौगम्याभावेन दाक्षिणात्योऽयमाचार्यः संभवतया निर्माय पूर्वं प्रचारयितुं स्वग्रंथानासीत्तत्रैव स्वजन्मभूमौ विभुः पश्चाच्चोत्तरभारते। मन्यामहेऽतो तज्जननमह्यामुपलभ्यमानमेव व्याकरणं तत्कृतं।

द्वितीयं-पुष्णंति संप्राप्तटीकाग्रंथाश्चास्मन्मतमेव। यावंत्यश्चोपलब्धा अधुनापर्यंतं टीकास्ता दृश्यंते दाक्षिणात्यसंस्करणं समाश्रित्यैवोपजीव्यमाना विहायैकां श्रीमदभयनंदिविरचितां महावृत्तिं। वर्तते सा चोत्तरीय संस्करणस्य। ये च सूत्रपाठप्रभृतिपंचपाठाः समुपलब्धास्तेऽपि दक्षिणसंस्करणस्यैव। आचार्यप्रवरश्री**गुणनंदि**विरचितायां **जैनेंद्र**प्रक्रियायां संदृश्यते स्थानेषु बहुषु समुल्लेखोऽधस्तनप्रकारकः।

**नमः श्रीपूज्यपादाय लक्षणं यदुपक्रमं।**
**यदेवात्र तदन्यत्र यन्नात्रास्ति न तत् क्वचित्॥**

तृतीयं-संकेतभिन्नता। ज्ञापितानि चोत्तरीयसंस्करणे परस्मैपदात्मनेपदोभयपदान्युदात्तानुदात्तस्वरितस्वरभेदचिन्हैः। न हि तद्वेदाभ्यायिनोऽन्यत् केषामपि सुज्ञानकरं ज्ञापनं। नास्माभिस्तेषां स्वरभावाभावमुररीक्रियते परं प्रतिभात्यस्मिन् सर्वोपयोगिनि व्याकरणे कर्तुरभिप्रायसिद्धयभाव एतादृशेन यत्नसाध्येन संकेतेन। संतुष्टिमुपगच्छामो वयं विलोक्य दक्षिणसंस्करणं न हि तत्रोपरिलिखितसंकेताश्रयणं। परं समाश्रिता विश्वहितसाधिकाऽपरैवाभिज्ञापनसरणिः। यया च स्थूलबुद्धयोऽन्यत्राकृतपरिश्रमिणोऽपि तज्ज्ञानसमर्था भवेयुः। संति चानुबंधका धातुष्वात्मनेपदपरस्मैपदोभयसंसूचकाः। तथाहि-वर्तते येषु ऐकारोऽथवा ङकारोऽनुबंधः संति तदात्मनेपदिनः। येषु ञकारस्तदुभयपदिनो येषु चाभावस्त्रयाणामपि संति ते परस्मैपदिनः। यथा-एधै-वृद्धौ, स्मिङ्-ईषद्धसने, वपीञ्-वपने, भू-सत्तायामादयः।

चतुर्थं-सर्वांगनिर्दोषव्याकरणता। तदेव निर्दोषं सर्वांगपूर्णं च व्याकरणशास्त्रं यत्सारगर्भितनिखिलार्थप्रतिपादकसूत्रसूत्रितं, समाश्रितभाषासामस्त्यावबोधकं। परमेतल्लक्षणाभावोऽस्त्युत्तरसंस्करणे। नहि तत्राखिलानिसूत्राणि, निबद्धास्तत्तत्स्थाने सूरिसूर्यश्री-अभयनंदिपादेन वार्तिकेष्टिप्रभृतयः। संसूच्यते तेन सूत्रकर्तुर्ज्ञानलाघवं तद्विषयाज्ञानाप्रसिद्धिकारणाभ्यामेव वार्तिकादिरचनायाः संभवात्। न हि वार्तिकवेदितविषयस्याप्रसिद्धिरासीत्तत्कालप्रथितग्रंथेषु तद्दर्शनात्, स्वयमाचार्यपूज्यपादैरेवोदाहृतत्वाच्च। समुदाहृतं तत्त्वार्थसूत्रटीकायां सर्वार्थसिद्धौ "**प्रमाणनयैरधिगमः**" इति सूत्रव्याख्यावेलायां "नयशब्दस्याल्पान्तरत्वात्पूर्वनिपातः प्राप्नोति। नैष दोषः। **अभ्यर्हितत्वात्**प्रमाणस्य तत्पूर्वनिपातः"। नास्त्येतद् विषयप्रतिपादकं किंचित्सूत्रं महावृत्तौ परं "अभ्यर्हितं पूर्वं निपततीति" कृतं वार्तिकमभयनंदिभिः। परं दाक्षिणात्ये संस्करणे दृश्यते "अर्च्यं ।१।३।११५। इति सूत्रं। एवमेवान्येषु बहुष्वपि स्थलेषु संदर्शनान्नाद्यांत्यकारणसंघटनं समुपयुज्यते। तदवध्रियतेऽस्माभिः दाक्षिणात्यमेवतन्निर्मितं।

पंचमं-उत्तरीयसंस्करणे प्रत्याहारसूत्रानुपलब्धिः। असंभवमेतावद्व्याकरणसूत्ररचयितुः स्वल्पप्रत्याहाररचनायामवहेलनं तथाऽन्याचार्यप्रणीतैस्तैः स्वकार्यसाधनं। परं संदृश्यंते भिन्नानि तानि दाक्षिणात्यसंस्करणे।

इति समुपस्थाप्य विवेचनायै स्वमतं विरम्यतेऽस्माभिः।

कलकत्ता।
२६-५-१६। } **श्रीश्रीलालः।**

# जैनेंद्रव्याकरणसूत्राणामकारादिक्रमणिका ।



यंख

तार

## अ

| | |
|---|---|
| विप्रं्यात् सूत्रात् | ३।२।७४ |
| धीदिभ्यो धेनोः | ३।१।१२२ |
| घतां टाप् | ३।१।४ |
| वे | ४।१।१२३ |
| विऽक्षणः | ४।२।९९ |
| ण् कुटिलकायाः | ३।३।१६९ |
| त्रिक्षत्रांगधर्मसंसर्गाद् विद्यायाः | ३।२।७५ |
| द्य-गीनाद्यप्रातीनमासन्नं | ४।३।१७५ |
| ध्यायिन्यदेशकालात् | ३।३।२२८ |
| ष्टे | २।३।१५७ |
| श्च षात् | ३।१।९ |
| मनः | ४।२।१३८ |
| अनींचः | ३।१।१७ |
| अनुपो स्वाबुप् | ३।४।३६ |
| अनुगादिनः | २।४।४७ |
| अनुग्वलं | ३।४।१७० |
| अतः पूर्वाह्णञ् | ३।३।४० |
| अतोऽवोऽधोऽमः | ३।२।१६७ |
| अपादानेऽहीयरुहोः | ४।२।६२ |
| अभिनिष्क्रामति द्वारं | ३।३।६९ |
| अभिजनः | ३।३।७५ |
| अर्द्धात् | ४।२।१२७ |
| अर्द्धात् पलकंसकर्षात् | ३।४।२९ |
| अवयवे तयट् | ३।४।२११ |
| अश्वत्थामह्नायण्याष्ठण् | ३।२।२४ |
| अश्वादेः फञ् | ३।१।१४१ |
| अश्वपत्यादेः | ३।१।९३ |
| अश्रद्धामर्षे | २।३।१३६ |
| अस्मिंश्च | ३।४।२० |
| अस् प्रजायाः | ४।२।१५९ |
| अस्मिन् | ४।२।२६ |
| अस्मिन्नधिकं शतसहस्रे तत्संख्यं शतिशद्दशांताड्डः | ३।४।२१४ |
| स्याश्चेरव्वौ | ५।२।१५५ |
| सन्नुणवने | ४।४।५३ |
| अस्ताति | ४।१।१६७ |
| असौ | ५।१।१८० |
| असिद्धोऽत्राभावद्युकुक् | ४।४।२० |
| अष्ट औश् | ५।१।१८ |
| अषडेकाच् प्राक्पदस्याचि | ४।१।१८७ |
| अहन् | ५।१।१०३ |
| अतो येय् | ५।१।१५४ |
| अश्नोः | ५।२।१९५ |
| अंधौ चोदन्वान् | ५।३।४९ |
| अतोऽन्हः | ५।४।१०७ |
| अघः | ५।३।७७ |
| अगः | ५।४।१०१ |
| अचोऽह्रोऽह्वः | ५।२।१४९ |
| अचः | ४।४।१३७ |
| अन्वादेशेऽश् | ५।१।१८८ |
| अविदूरेऽभेः | ५।१।१३१ |
| अनुशतिकादीनां | ५।२।२४ |
| अण्मोः | ५।२।११९ |
| अतोऽनादेर्घेः | ५।१।९२ |
| अतोऽम् | ५।१।२३ |
| अल्पे | ४।३।२७३ |
| अकर्त्तरि | २।३।१९ |
| अकर्मको धिः | १।२।२ |
| अकामेऽमूर्धमस्तकात् स्वांगात् | ४।३।१६० |
| अक्षादूहिण्यां | ४।३।८५ |
| अगे | ४।४।५० |
| अग्नेंद्रादिषु देवतानां | ४।३।१८० |
| अग्नौ चेः | २।२।९२ |
| अचः | ४।३।३ |
| अचश्च | १।१।६ |
| अचि | ४।३।२४२ |
| अचि | १।४।१४७ |
| अचित्तेऽचः | २।१।१३५ |
| अचीको यण् | ४।३।७३ |
| अजाद्यत् | १।३।११३ |
| अटश्च भी | ४।३।९० |

## आ

झ

ध

न

## भ

म

## ल

## ह

इति जैनेंद्रव्याकरणस्याकारादिक्रमणिका समाप्ता ।





सनातनजैनग्रंथमाला ।
६

आचार्यवर्यश्रीसोमदेवसूरिविरचिता

# शब्दार्णवचंद्रिका ।

( जैनेंद्रलघुवृत्तिः )

श्रीपूज्यपादममलं गुणनंदिदेवं सोमामरव्रतिपपूजितपादयुग्मं ।
सिद्धं समुन्नतपदं वृषभं जिनेंद्रं, सच्छब्दलक्षणमहं विनमामि वीरं ॥ १ ॥
श्रीमूलसंघजलजप्रतिबोधभानोर्मेघेंदुदीक्षितभुजंगसुधाकरस्य ।
राद्धांततोयनिधिवृद्धिकरस्य वृत्तिं, रेभे हरींदुयतये वरदीक्षिताय ॥ २ ॥

लक्ष्मीरात्यंतिकी यस्य निरवद्यावभासते ।
देवनंदितपूजेशे नमस्तस्मै स्वयंभुवे ॥ १ ॥

---

**सिद्धिरनेकांतात्** ॥ १ ॥ सिद्धिः शब्दानां निष्पत्तिर्ज्ञप्तिर्वा भवत्यनेकांतात्, अस्तित्वनास्तित्व नित्यत्वानित्यत्वविशेषणाविशेष्याद्यात्मकत्वात् दृष्टेष्टप्रमाणाविरुद्धादाशास्त्रपरिसमाप्तेरित्येषोऽधिकारो वेदितव्यः । वक्ष्यति—सात्मेतादिरिति । अनेकांताधिकारे सत्येवाद्यंतव्यपदेशो घटते, अन्यथा तदभावात् किं केन सह गृह्येत यतः संज्ञा स्यात्। तथा—सस्थानक्रियं स्वमिति—साधर्म्यवैधर्म्यात्मके सत्यनेकांतेऽकाराकारयोर्ह्रस्वदीर्घकालभेदेन वैधर्म्येऽपि तुल्यस्थानक्रियत्वेन साधर्म्यात् स्वसंज्ञाव्यवहारः सिद्धः । अधु मृदिति च भावाभावाभ्यां विभक्त्यंतेषु शब्देष्वर्थवत्ताऽनेकांतात् सिद्ध्यति । तदवयवानामपि । वृक्ष इत्यत्र विसर्जनीयस्यैकत्वार्थस्य च सद्भावः औकाराद्यभावश्चैकांते नास्ति । तथा "ध्यपाये ध्रुवमपादानं" इत्येवमादिना लक्षणेन षट्कारकी सर्वथा नित्यक्षणिकयोर्नोपपद्यते ध्यपायध्रौव्याद्यभावादिति । किं बहुना-उन्मिषितमात्रमप्यनेकांतमंतरेण न सिद्ध्यतीत्येषोऽधिकारो निर्णेतव्यः ।

* **अइउण् १ । ऋऌक् २ । एओङ् ३ । ऐऔच् ४ । हयवरलण् ५ । ञमङणनम् ६ । झभञ् ७ । घढधष् ८ । जबगडदश् ९ । खफछठथचटतव् १० । कपय् ११ । शषसअंअः ꣵक ꣵपर् १२ । हल् १३ ।**

इति प्रत्याहाराः । ऌवर्णाग्रहणं ऋवर्णऌवर्णयोरेकत्वाभ्युपगमात् । हकारस्य द्विरुपादानं वृक्षे हसत्यधुक्षदिति सिद्ध्ये ।

* **सात्मेतादिः** ॥२॥ इत्संज्ञकेन सहोच्चार्यमाणः आदिवर्णस्तन्मध्यपतितानां ग्राहको भवत्यात्मना सह । अण् । हल् । मिङ् । सुप् । सुट् ।

* **स्वस्याऽभाव्योऽत्परोऽणुदित्** ॥ ३ ॥ अण् उदिच्च गृह्यमाणः स्वस्य ग्राहको भवत्यात्मना सह भा-

---

१ समाना स्थाने क्रिया यस्य, समाने स्थानक्रिये वाऽस्य तत् ।

* एवं चिह्नितसूत्राणि पंरवर्तितान्यभयनंदिविरचितमहावृत्तौ । १ वलोपोऽत्र ।

व्यं त्परं च वर्जयित्वा । एरिति खं । प्लाक्षिः । चौलिः । दैत्यः । कौमारः । उदित्– चोः कुः । ष्टुना ष्टुः । भाव्य इति किं ?"त्यदादेरः"इत्यत्र आकारस्य ग्रहणं नास्ति भाव्यत्वात् ।

आदेशः प्रत्ययश्चैव कटमेतो हि लक्ष्मणि ।
भाव्यशब्देन पंचैते कथ्यंते देवनंदिभिः ॥

अत्पर इति किं ? भिसोऽत ऐस् । धर्मैः । दध्याभिरित्यत्र ऐस् न भवति ।

**सस्थानक्रियं स्वं ॥ ४ ॥** समाने स्थानक्रिये यस्य वर्णस्य स स्वसंज्ञो भवति । अ अ अ उदात्तोऽनुदात्तः स्वरितश्च ङश्चाङश्च । एवं दीपौ ज्ञातव्यौ । इत्यवर्णस्याष्टादश भेदाः परस्परं स्वा भवंति । तथेवर्णादीनामपि । एचां द्वादशभेदाः प्रस्याभावात् । यवला द्विधा–ङश्चाङश्च । रेफोष्मणां स्वा न सांति । वर्ग्यो वर्ग्येण स्वं । लोकाग्रमित्यादि । स्थानग्रहणं किं ? कचटतपानां मा भूत् । तर्प्ता । क्रियाग्रहणं किं ? इचुयशानां मा भूत् । अरुश्च्योताति । स्वप्रदेशाः "स्वेऽको दीः"इत्येवमादयः ।

**आकालोऽच् प्रदीपः ॥ ५ ॥** अ आ आ ३ इत्येवं कालोऽच् प्रदीपसंज्ञो भवति । दधि । गौरी । एहि जिनदत्त ३ । हलचां संघातनिवृत्त्यर्थमच्ग्रहणं । प्रतक्ष्य । तितउच्छत्रं । अन्यथात्र तुगुतुग्विकल्पौ स्यातां । प्रदीपप्रदेशाः "प्रो नपि" इत्येवमादयः ।

**अचश्च ॥ ६ ॥** अचः स्थाने प्रदीपसंज्ञका भवंति । अतिश्रि । स्तूयते । आव्रज जिनदत्ता ३ । अच इति किं ? सुवाक् कुलं । भिद्यते । धर्मवी३त् । चकारः संज्ञाविधौ नियमार्थः । द्यौः, पंथाः, यः, सः ।

**नासिक्यो ङः ॥ ७ ॥** नासिकायां भवो वर्णो ङसंज्ञो भवति । ञमङणनाः । शांतः दांतः । नासिक्य इति किं ? ततः तप्तवान् । ङप्रदेशाः "ङस्य झल्क्व्योः क्ङिति"इत्यादयः ।

**हलोऽनंतराः स्फः ॥ ८ ॥** हलोऽनंतराः अज्भिरव्यवहिताः स्फसंज्ञकाः भवंति । धर्म-रमौ । इन्द्रे-मदराः । हल इति किं ? तितउः । अनंतरा इति किं? पनसं । शाकं । स्फप्रदेशाः "स्फे रुः"इत्येवमादयः ।

**अधु मृत् ॥ ९ ॥** धुवर्जितमर्थवच्छब्दरूपं मृत्संज्ञं भवति । डित्थः । डवित्थः । शुक्लः । अध्विति किं ? अहन् । मृत्प्रदेशाः "ङ्याप्मृदः" इत्येवमादयः

**कृद्धृत्साः ॥ १० ॥** कृदंतं हृदंतं ससंज्ञकं च मृत्संज्ञकं भवति । ज्ञाता । द्रष्टा । प्राजापत्यः । जिनधर्मः । नियमोऽयं त्यांतानां कृद्धृतोरेवेति । इह मा भूत्– अभवन् । अर्थवत्पदसंघातानां ससंज्ञस्यैव मृत्संज्ञा न वाक्यस्य, साधुर्धर्मं ब्रूते ।

**प्रो नपि ॥ ११ ॥** नपि वर्तमानस्य मृदः प्रो भवति । अतिरि । अतिवधु कुलं । नतभ्रु मुखं । नपीति किं ? राजकुमारी ।

**गोण्या मेये ॥ १२ ॥** गोण्याः प्रो भवति मेयेऽर्थे । गोणीमात्रं गोणिः । मेय इति किं ? गोणी ।

**स्त्रीगोर्नीचः ॥ १३ ॥** न्यग्भूतस्य स्त्रीत्यांतस्य गोशब्दांतस्य च मृदः प्रो भवति । अतिखट्वः । निष्कौशाम्बिः । निर्दयः । चित्रगुः । स्त्रीगोरिति किं ? अतिश्रीः । नीच इति किं ? नक्षत्रमाला । सुगौः ।

**+ नांशीयसो बे ॥ १४ ॥** अंशिलक्षणसविधेरीयसश्च यः स्त्रीत्यस्तदंतस्य नीचो बसे प्रो न भवति । पूर्वशाला । अर्द्धपिप्पली । बह्व्यः श्रेयस्योऽस्य स बहुश्रेयसी जिनः । बस इति किं ? निःश्रेयसिः ।

*** हृदुप्यसूचीगोण्योरुप् ॥ १५ ॥** हृदुपि सति स्त्रीत्यस्य नीचः उप् भवति सूचीगोण्यौ विहाय । पंचेंद्राण्यो देवताः अस्य पंचेंद्रः । दशभिः शष्कुलीभिः क्रीतः दशशष्कुलः । आमलक्याः अवयवः फलं

१ वर्णोत्पत्तिप्रदेशः स्थानं । अकुहविसर्जनीयजिह्वामूलीयानां कंठः । हविसर्जनीययोरुरः । कोर्जिह्वामूलीयस्य जिह्वामूलं । इ ए ऐ चुयशानां तालु । उ ओ औ पूपध्मानीयानामोष्ठौ । वस्य दंतोष्ठं । ऋटुरषाणां मूर्धा । लृतुलसानां दंताः । नासिकानुस्वारस्य । क्रिया करणं प्रयत्नः । स्पृष्टं करणं स्पर्शानां । ईषत्स्पृष्टं यणां । विवृतमचां । विवृततरमेदोतोः । ऐदौतोर्विवृततमं । अवर्णस्यातिविवृततमं । संवृतमकारस्य । ईषद्विवृतं शषसहानां ।

वर्गेष्वाद्या द्वितीयाश्च शषसा अप्यघोषकाः ।
द्वितीयतुर्यवर्णाः स्युर्महाप्राणाः हसंयुताः ॥१॥

+ एवं विहितसूत्राणां स्थाने कृतान्यभयनंदिविरचितमहावृत्तौ पाणिनीयवद्वार्तिकानि ।

आमलकं । बकुलं । बदरं । इदिति किं ? गार्गीपुत्रः । उपीति किं ? गार्गी त्वं । असूचीमोण्योरिति किं ? पंचभिः सूचीभिः क्रीतः पंचसूचिः । दशगोणिः ।

**आदैगैप् ॥ १६ ॥** आदैचो वर्णाः ऐप् संज्ञा भवंति । नाडायनः । रैमयं । नौमयं । ऐप्प्रदेशाः "मृजेरैप्" इत्येवमादयः ।

**अदेङेप् ॥ १७ ॥** अदेङो वर्णा एप्संज्ञका भवंति । सर्ता । नेता । भोक्ता । एप्प्रदेशाः "मिंदेरेप्" इत्यादयः ।

**इकस्तौ ॥ १८ ॥** तावैबेपौ इक एव स्थाने स्तः । सावैम्मे–अनैषीत् । गामयोः–नयति । इक इति किं ? आदेज्झलां मा भूत् । यानं । ग्लायति । उंभिता । तौग्रहणं संज्ञाविधौ नियमार्थं । मंथाः । यः ।

**न धुखेऽगे ॥ १९ ॥** धोरेकदेशस्य खनिमित्तेऽगे ऐबेपौ न स्तः । लोलुवः । पोपुवः । मरीमृजः । देद्यः । धुखे इति किं ? लूञ्–लविता । अग इति किं ? रोरवीति । इक इति किं ? रागः ।

**ग्क्ङिति ॥ २० ॥** गिति किति ङिति च परे ऐबेपौ न स्तः । भूष्णुः । जिष्णुः । मृष्टं । चितं । चिनुतः । मृष्टः ।

**ईदूदेद्द्विर्दिः ॥ २१ ॥** ईदूदेदंतो यो द्विः स दिसंज्ञो भवति । मुनी इमौ । साधू एतौ । द्वे अत्र । ईदूदेदिति किं ? वृक्षाविमौ । द्विरिति किं ? वध्वर्थः । दिप्रदेशाः "दे:"इत्यादयः ।

**मः ॥ २२ ॥** दकारस्य स्थाने यः कृतो मकारस्तस्मात्परौ ईदूतौ दिसंज्ञौ भवतः । अमी आसते । अमू अत्र । द इति किं ? शम्यत्र । म इति किं ? तेऽत्र ।

*** न्यजनाङ् ॥ २३ ॥** निसंज्ञोऽच् आङ्वार्जितो दिसंज्ञो भवति । अ अपेहि । इ इंद्रं पश्य । उ उत्तिष्ठ । नीति किं ? चकारात्र । अनाङिति किं ? आ उष्णं ओष्णं । आ इहि–एहि । आ उदकांतात्–ओदकांतात् । आ आर्येभ्यः–आर्येभ्योऽस्य यशोगतं भट्टाकलंकदेवस्य । ङित्करणं किं ? आ एवमनुमन्यसे । आ एवं किल तत् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

**ओत् ॥ २४ ॥** ओदंतो निर्दिसंज्ञो भवति । अहो इदं । उताहो एवं ।

**कौ वेतौ ॥ २५ ॥** किनिमित्त ओकार इति शब्दे परतः वा दिसंज्ञो भवति । साधो इति । साधविति । काविति किं ? गविल्ययमाह । इतौ इति किं ? पटोऽत्र ।

**उञः ॥ २६ ॥** उञो वा दिसंज्ञा भवति इतौ परतः । उ इति विति ।

**ऊँ ॥ २७ ॥** उञः ऊँ इत्ययमादेशो भवति इतौ परतः स च दिसंज्ञो भवति । ऊँ इति ।

**दाधा भ्वपित् ॥ २८ ॥** दा धा इत्येवं रूपा धवः भुसंज्ञका भवंति पितौ मुक्त्वा । प्रणिदाता । प्रणिदयते । प्रणिददाति । प्रणिद्यति । प्रणिधयति । विधीयते । अपिदिति किं ? दातं बर्हिः । अवदातं मुखं । भुप्रदेशाः "भुस्थोरिः"इत्येवमादयः ।

**क्तक्तवतू तः ॥ २९ ॥** क्तः क्तवतुश्च तसंज्ञो भवतः । कृतः । कृतवान् । कारितः । कारितवान् । तप्रदेशाः "ते सेटि"आदयः ।

**संज्ञा खुः ॥ ३० ॥** संज्ञाशब्दवाच्योऽर्थः खुसंज्ञो भवति । खुप्रदेशाः "वा खोः"इत्येवमादयः ।

**भावकर्म ङिः ॥ ३१ ॥** भावकर्मणी ङिसंज्ञे स्तः । ङिप्रदेशाः "ङौ" इत्येवमादयः ।

*** श्यनपसुट् धं ॥ ३२ ॥** शि अनपसुट् च धसंज्ञं भवति । कुंडानि तिष्ठंति, पश्य वा । राजा । राजानौ । राजानः । राजानं । राजानौ । श्यनप्सुडिति किं ? सामनी । राज्ञः पश्य । धप्रदेशाः "धेऽकौ"इत्येवमादयः ।

**+ स्थिः संख्या ॥ ३३ ॥** संख्याशब्दः स्थिसंज्ञो भवति । पंचधा । पंचकृत्वः । स्थिप्रदेशाः "स्थेर्विधार्थे धा"इत्येवमादयः ।

**+ बहुगणं भेदे ॥ ३४ ॥** बहुगणशब्दौ भेदार्थे स्थिसंज्ञौ भवतः । बहुकः । गणकः । बहुधा ।

गणधा। भेद इति किं? वैपुल्ये संघे च मा भूत्। बहुः सूपः। गवां गणः।

**+ कसेऽद्धयर्द्धं ॥३५॥** कविधौ सविधौ चाद्धयर्द्धशब्दः स्यिसंज्ञो भवति। अद्धयर्द्धेन क्रीतं अद्धयर्द्धकं। अद्धयर्द्धशूर्पं। कस इति किं? माभूद् धादौ।

**+ डडर्द्धमाक् ॥ ३६ ॥** अर्धपूर्वो डडंतः कसविधौ स्यिसंज्ञो भवति। अर्द्धपंचमैः क्रीतं अर्द्धपंचमकं। अर्द्धपंचमशूर्पं।

**+ घतुः ॥ ३७ ॥** घतुत्यंतः स्यिसंज्ञो भवति। इयत्कः। कियद्धा। एतावत्कृत्वः। यावत्कः। तावत्कः।

**+डतिः ॥ ३८ ॥** डतित्यंतः स्यिसंज्ञो भवति। कतिकः। यतिधा। ततिकृत्वः।

***ष्णांता चेल् ॥ ३९ ॥** षकारनकारांता इलंता च संख्या इल्संज्ञा भवति। षट्। पंच। कति संति। अंतग्रहणमुपदेशार्थं। तेनाष्टानामिति भवति। न शतानीत्यादौ। इल्प्रदेशाः "उबिलः" इत्येवमादयः।

*** स्निः सर्वादिः॥ ४० ॥** सर्वादयः शब्दाः स्निसंज्ञा भवंति। सर्वे। विश्वे। अन्ये। सर्वेषां। सर्वस्यै। सर्वस्मै। यस्मै। तस्मै। स्निप्रदेशाः "स्नेः स्मै" इत्यादयः।

**+ समं सर्वयुक्ते ॥४१ ॥** समशब्दः सर्वयुक्तार्थयोः स्निसंज्ञो भवति। समस्मिन्। सर्वयुक्ते इति किं? समे देशे वसति।

*** पूर्वपरावरदक्षिणोत्तरापराधराण्यखौ व्यवस्थायां ॥ ४२ ॥** पूर्वादीनि अखौ व्यवस्थायां वर्तमानानि स्निसंज्ञानि भवंति। पूर्वस्मै। परस्मै। अवरस्मै। दक्षिणेषां। उत्तरस्मै। अपरेषां। अधरस्मै। अखाविति किं? उत्तराणां कुरूणां। व्यवस्थायामिति किं? दक्षिणाय गायकाय देहि। प्रावीण्यमत्र प्रतीयते। न तु दिग्देशकालकृतोऽवधिनियमः।

**+ स्वमज्ञातिधनाख्यायां॥ ४३ ॥** स्वमित्येतद्रूपं अज्ञातिधनाख्यायां स्निसंज्ञं भवति। यत् स्वस्मै रोचते तत् स्वस्मै ददाति। यदात्मने रोचते तदात्मीयाय ददातीत्यर्थः। अज्ञातिधनाख्यायामिति किं? स्वाय ददाति। स्वाय क्लिश्यते। ज्ञातये धनाय वेत्यर्थः। आख्याग्रहणं किं? ज्ञातिधनपर्यायस्य स्वशब्दस्य निषेधोऽन्यस्य तु मा भूत्। स्वस्मै पुत्राय। स्वस्मै गवे।

**+ बहिर्योगोपसंव्यानेऽपुर्यंतरं ॥४४॥** बहिर्योगे उपसंव्याने चांतरं स्निसंज्ञं भवति पुरं विमुच्य। अंतरस्मै वनाय देहि। बहिष्टेन युक्ताय बाह्याय बाह्येनाभ्यंतरायेत्यर्थः। अंतरस्मै वस्त्राय। उपसंव्यानायोत्तरीयायोपसंवीयमानाय वा परिधानायेत्यर्थः। बहिर्योगोपसंव्याने इति किं? अस्मिन्नंतरे शीतान्युदकानि, मध्य इत्यर्थः। अपुरीति किं? अंतरायां पुरि वसति। प्राकारात् बाह्यायामभ्यंतरायां वेत्यर्थः।

*** पूर्वादिरङ् ङ्यस्योर्वा ॥ ४५ ॥** पूर्वादयो नवाकारांता ङिङस्योः परतः स्निसंज्ञा वा भवंति। पूर्वस्मिन्, पूर्वे। पूर्वस्मात्, पूर्वात्। परस्मिन्, परे। परस्मात्, परात्। अवरस्मिन्, अवरे। अवरस्मात्, अवरात्। दक्षिणस्मिन्, दक्षिणे। दक्षिणस्मात्, दक्षिणात्। उत्तरस्मिन्, उत्तरे। उत्तरस्मात्, उत्तरात्। अपरस्मिन्, अपरे। अपरस्मात्, अपरात्। अधरस्मिन्, अधरे। अधरस्मात्, अधरात्। स्वस्मिन्, स्वे। स्वस्मात्, स्वात्। अंतरस्मिन्, अंतरे। अंतरस्मात्, अंतरात्। अदिति किं? पूर्वस्यां। पूर्वस्याः। ङिङस्योराश्रयं कार्यं विकल्प्यते अक्तु भवत्येव। पूर्वकस्मिन्, पूर्वके।

*** जसि॥ ४६ ॥** पूर्वादयो जसि स्निसंज्ञा वा भवंति। पूर्वे, पूर्वाः। परे, पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः। स्वे, स्वाः। अंतरे, अंतराः।

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाः ॥४७॥** प्रथमादयो जसि वा स्निसंज्ञा भवंति। प्रथमे, प्रथमाः। चरमे, चरमाः। द्वितये, द्वितयाः। द्वये, द्वयाः। अल्पे, अल्पाः। अर्द्धे, अर्द्धाः। कतिपये, कतिपयाः। नेमे, नेमाः।

*त्रिर्द्वंद्वे॥ ४८ ॥ द्वंद्वे से सर्वादिर्वा जसि त्रिसंज्ञो भवति । कतरकतमे । कतरकतमाः । इतरान्यतरे । इतरान्यतराः ।

*न॥ ४९ ॥ सर्वादिर्द्वंद्वे से त्रिसंज्ञो न भवति । कतरकतमाय । पूर्वपरात् । कतरकतमानां ।

*बसे ॥ ५० ॥ सर्वादिर्बसे त्रिसंज्ञो न भवति । प्रियसर्वाय । द्व्यन्याय । त्र्यन्यात् । बग्रहणं किं ? परमसर्वस्मै । सग्रहणं किं ? आतिदेशिके बे निषेधो मा भूत् । एकैकस्मै देहि ।

भासे ॥ ५१ ॥ भालक्षणे से सर्वादिः त्रिसंज्ञो न भवति । मासपूर्वाय । संवत्सरावराय । से वर्तमाने पुनः सग्रहणं भासार्थे वाक्येऽपि निषेधार्थं । मासेन पूर्वाय ।

*वा दिग्बे ॥ ५२ ॥ दिग्लक्षणे बसे सर्वादिर्वा त्रिसंज्ञा भवति । दक्षिणपूर्वस्यै । दक्षिणपूर्वायै । उत्तरपूर्वासां । उत्तरपूर्वाणां ।

*तीयो ङिति॥ ५३ ॥ तीयत्यांतो ङिति त्रिसंज्ञो वा भवति । द्वितीयस्मै । द्वितीयाय । तृतीयस्यै । तृतीयायै । ङितीति किं ? द्वितीयानां ।

*तास्थाऽन्तेऽलः ॥ ५४ ॥ तांतस्य स्थाने विधिरुच्यमानोऽते वर्तमानस्यालः स्थाने भवति । त्यदादेरः—स्यः । स्थानग्रहणं स्वस्वाम्यादिनिरासार्थं । अंत इत्यादिमध्यनिवृत्यर्थं । अल् सर्वादेशनिवृत्यर्थं ।

ङित् ॥ ५५ ॥ ङिदादेशोंऽते वर्तमानस्यालः स्थाने भवति । युष्मदस्मदोऽकञ् वाऽञ्खञौ—यौष्माकीणः । आस्माकीनः । नियमोऽयं—ङिदेवानेकाल् अंतस्य स्थानेऽतोऽन्यः तानिर्दिष्टस्य सर्वस्य स्थाने भवति । ब्रूञो वच्-वक्ता ।

*स्वासन्नः॥ ५६ ॥ इह स्वासन्नस्यास्वासन्नस्य प्रसंगे स्थानार्थगुणप्रमाणैर्यथास्वमासन्न एव विधिर्भवति । स्थानतः— दंडाग्रं । साधूदितं । अर्थतः— वतंडी चासौ युवतिश्च वातंडययुवतिः । गुणतः— पाकः । त्यागः । प्रमाणतः— अमुष्मै । अमूभ्याम् ॥ चेता स्तोतेत्यत्र स्थानानुवृत्तेर्न प्रमाणतोऽकारः । सुष्ठ्वासन्न इति किं ? वाग्घसति ।

+युजां योगे॥ ५७ ॥ युजां संबंधिनां यो विधिः स योगे संबंध एव भवति । श्वशुराद्यः—श्वशुर्यः । श्वशुर इति कस्यचिन्नाम तस्मात् श्वशुरस्यापत्यं "अत इञ्" एव । श्वाशुरिः ।

रंतोऽणुः ॥ ५८ ॥ ऋवर्णस्य स्थाने अण् शिष्यमाणः रपरो भवति । किरति । पितुः । अणिति किं ? मातापितरौ । उरिति किं ? गेयं ।

परस्यादेः ॥ ५९ ॥ कानिर्देशेन परस्य कार्यं शिष्यमाणं तस्यादेरलः स्थाने भवति । द्व्यंतर्गेरीदपोनात्—द्वीपः । ईदासः—आसीनोऽधीते ।

शित्सर्वस्य ॥६०॥ शिदादेशः सर्वस्य स्थाने भवति । जसः शी- के । जस्शसोः शिः- धनानि संति ।

टिदादिः ॥ ६१ ॥ टिद्यः आगमः स तानिर्दिष्टस्यादिर्भवति । वलादेरिट्—भविता ।

किदंतः ॥ ६२ ॥ किद्यः आगमः स तानिर्दिष्टस्यांतो भवति । पिति कृति तुक्—धर्मवित् ।

परोऽचो मित् ॥ ६३ ॥ मिद्यः आगमः स तानिर्दिष्टस्याचोंऽत्यात् परो भवति । इदिद्वोर्नुम्-बंदे वृषभेश्वरं ।

*स्पर्द्धे॥ ६४ ॥ द्वयोरन्यार्थयोस्तुल्यबलयोरेकत्र प्राप्तो यः संघर्षः स स्पर्द्धस्तस्मिन् परं कार्यं भवति । सुपि दीः—देवाभ्यां । बहौ झल्येत्—देवेषु । देवेभ्यः—इत्यत्र द्वितयं प्राप्तं परमेत्वमेव ।

*स्थानीवानल्विधौ॥ ६५ ॥ स्थानीव भवत्यादेशः । धुगुकृद्धृत्सुम्मिङ्पदादेशाः ध्वादिवद्भवंति, अस्तेर्भूः-भविता । तृच् सिद्धः । गुवद् ग्वादेशः । त्रयाणां । गोर्दीत्वं । कृद्वत्कृदादेशः । प्रहत्य । कृत्वातुक् । हृद्वद् हृदादेशः । आक्षिकः । मृत्संज्ञा । सुब्वत् सुबादेशः । धर्माय । सुपि दीत्वं । मिङ्वन्मिङादेशः । बभूवतुः । मिङ्त्वात्पदं । पदवद्पादेशः । अचिनुतं । क्त्वादेप्निषेधः । पदवत्पदादेशः

धर्म्मो वो वर्द्धतां। पदत्वाद्वित्वं। अनल्विधाविति किं? अलः स्थाने विधौ-पंथाः। सः। पथित्यदादेशौ सुखे कर्तव्ये स्थानीव न भवतः। कः इष्टः।

* परेऽचः प्राक् ॥ ६६ ॥ परनिमित्तकोऽजादेशः पूर्वविधौ कर्तव्ये स्थानीव भवति। पटुमाचष्टे पटयति। कथयति। अवधीत्। पर इति किं? वैयाघ्रपद्यः। पादस्य खं पद्भावे क्रियमाणे न स्थानीव भवति। अच इति किं? अभिमत्य। डखं तुकि (तुगागमे) न स्थानीव भवति। प्राच इति किं? नैधेयः। अजलक्षणं ढणि क्रियमाणे आत्खं न स्थानीव भवति।

* न द्विपदांतवरेयखक्किञ्यम्कादेः ॥ ६७ ॥ द्वित्व पदांत वर ई यख क्कि ञि अम् इत्येषां कु आदिशब्दोक्त-दी-अनुस्वार-चर्त्व-परस्वत्व इत्येषां च विधौ कर्तव्ये अजादेशः स्थानीव न भवति। दध्यत्र। धस्य द्वित्वे कर्तव्ये यणादेशः स्थानिवन्न भवति। निषंति। विषंति। यणि कर्तव्ये श्नसः खं स्थानिवन्न भवति। यायावरः। पश्चात् इटि चात्खमित्यातः खे कर्तव्ये यङोऽतः खमगनिमित्तं वरविधौ न स्थानीव भवति। बदर्याः फलं बदरं। ङ्यामित्यखे स्त्रीत्यस्योप् न स्थानीव भवति। कंडूतिः। यखे कर्तव्ये अतःखं क्तिचनिमित्तं न स्थानीव भवति। वेवयतेर्वेयूः। ऊठि कर्तव्ये क्विनिमित्तं णिखं न स्थानीव भवति। अशामि। शामं शामं। णिजंतात् णौ अमि च परतो दीत्वे कर्तव्ये णिखं न स्थानीव भवति। पाक्। विच्निमित्तं णिखं कुत्वे कर्तव्ये न स्थानीव भवति। प्रतिदीव्ना। दीत्वे कर्तव्ये अनोखं न स्थानीव भवति। शिंषंति। नकारस्यानुस्वारे कर्तव्येऽखं न स्थानीव भवति। जक्षतुः। जक्षुः। उङ्खं चर्त्वे कर्तव्ये न स्थानीव भवति। पिण्ढि। शिण्ढि। अनुस्वारस्य परस्वत्वे कर्तव्येऽत्खं न स्थानीव भवति।

द्वित्वेऽचि ॥ ६८ ॥ द्वित्वनिमित्तेऽच्यजादेशः द्वित्वे कर्तव्ये स्थानिवद्भवति। ण्युङात्खयणायादेशाः प्रयोजनं। आटिटत्। जग्मतुः। पपुः। ण्युङात्खस्य स्थानिवत्त्वादेकाचो द्वित्वं। चक्रुः। निनयिथ। निनाय। लुलविथ। लुलाव। यणयाद्यादेशानां स्थानिवत्त्वात् क्नेनैलोलौ द्वित्वं। द्वित्वनिमित्त इति किं? सुस्यूषति। नायमूठ् द्वित्वनिमित्तं। अचीति किं? जेघ्रीयते। यङि परत ईत्वं न स्थानिवत्।

* ईप्केत्यासन्नमाक्परयोः ॥ ६९ ॥ इतिरर्थपरः। ईवर्थः कार्यश्च यत्र निर्दिश्यते तत्र यथाक्रमं पूर्वस्य परस्यासन्नस्य कार्यं भवति। अचीको यण्— दध्योदनं। धादत्— दधाति। आसन्नग्रहणं किं? धर्मविदत्र। चिकीर्षति।

नाशः खं ॥ ७० ॥ नाशशब्दवाच्योऽर्थः खसंज्ञो भवति। रूढिः। "ढो ढि खं" इत्यादयः प्रदेशाः।

उबुजुश् ॥ ७१ ॥ तस्यैव नाशस्य उप् उब् उश् इत्येताः संज्ञाः भवंति। स्तौति। जुहोति। पंचालाः। उबुजुश् प्रदेशाः "ह्वदादेरुजुप्" "जनपद उश्" इत्यादयः।

त्यखे त्याश्रयं ॥ ७२ ॥ त्यखे कृतेऽपि त्याश्रितं कार्यं भवति। सुम्मिङ्णिखानि प्रयोजनं। सर्ववित्। सोः खेऽपि पदसंज्ञा। अधोक्। "हल्ङ्याब्यः सुसिप्त्यनच्" इति तिपः खेऽपि पदसंज्ञायामेपधत्वभष्टचर्त्वानि स्युः। अग्निचित्। क्विपः खेऽपि तुक्। पापचीति। यङः खेऽपि द्वित्वादि कार्यं। भाव्यते। णेः खेऽप्यैब् भवति।

नोमता गोः ॥ ७३ ॥ उबुजुशामुरस्यास्तीति उमान्। तेन लुप्ते त्ये गोस्त्याश्रयं कार्यं न भवति। मृष्टः। जुहुतः। शबाश्रयावैबेपौ न भवतः। गोरिति किं? परीपृच्छीति। यङाश्रयौ द्वित्वयणिकौ स्तः।

+ रेऽह्नः ॥ ७४ ॥ रेफे कर्तव्येऽह्नः उमता वचनेन त्यखे त्याश्रयं कार्यं न भवति। अहर्ददाति।

+ वृत्त्यंतस्य ॥ ७५ ॥ समासांतस्य उमता त्यखे त्याश्रयं कार्यं नास्ति। सुवाचौ। परमगिरौ। त्याश्रये हि पदत्वे कुत्वादिः प्रसज्येत। वृत्तिग्रहणं किं? तव शर्म। अंतग्रहणं किं? वाक्त्वक्स्रुचः।

*टर्यंत्याद्यचः ॥ ७६ ॥ अचां मध्ये योऽन्त्यो-ऽच् तदादि शब्दरूपं टिसंज्ञं भवति। धर्मविद्-अत्रेच्छब्दः। तत्त्वभुद्-अत्रेच्छब्दः। आताम्-आम्शब्दः। टिप्रदेशाः "टिद्टेरेः" इत्यादयः।

उपांत्यालुङ् ॥ ७७ ॥ अलामंतस्य समीपोऽल् उङ्संज्ञो भवति। पच्-इत्यकारः। पाचकः। भिद्-इतीकारः। भेत्ता। व्यवहितांत्यनिवृत्यर्थमुपांत्यग्रहणं। उङ्प्रदेशाः "उङोऽतः" इत्यादयः।

येनाल्विधिस्तदंताद्योः ॥ ७८ ॥ येनाचा हला वा यो विधिर्विधीयते स तदंतस्य अलि च यो विधिः स तदादौ भवति। योऽचोऽव्वास्वुः। सरोर्हल्ः। जेयं। शिक्षा। हल्स्नुधभ्रुवोऽचीयुव्योः। चिक्षियतुः। चिक्षियुः।

+न सत्येऽनुगिति ॥ ७९ ॥ सविधौ त्यविधौ च तदंतविधिर्नास्ति उगित्कार्यं विहाय। कष्टं परमश्रितः। इप्सो न भवति। सौत्रनाडि। नडादेः फण् न भवति। अनुगितीति किं? भवती। अतिभवती।

+यत्त्यस्तदादेः ॥ ८० ॥ यस्मात् प्रकृतिविशेषात् यस्त्यो विधीयते स तदादेः समुदायस्य भवति। मातृभोगीणः। समुदायस्य सुबंतत्वेनैकपदत्वात् णत्वं। पुत्रकाम्यति। स्वेपः काम्यो नाधिकारान्न भवति। महांतं पुत्रमिच्छति।

+स्त्री न्यङ् ॥ ८१ ॥ यस्मात् स्त्रीत्यस्तदादेर्न्यङ् अप्रधानमेव भवति। अतिकारीषगंध्यबंधुः। बंधौ परे ष्यस्य प्रधानभूत ईश् न भवति। न्यङिति किं? परमकारीषगंधीबधुः।

+कृत् सतिकारकस्यापि ॥ ८२ ॥ कृत्संज्ञस्त्यः सतिसंज्ञस्यापि सकारकस्यापि तदादेः समुदायस्य ग्राहको भवति। अपिशब्दात् केवलस्यापि। उदके विशीर्णं। अवतप्तेनकुलस्थितं। भस्मानिहुतं।

*यस्याच्स्वाद्यैन्दुः ॥ ८३ ॥ यस्य शब्दस्याचां मध्ये आद्यच् ऐप् स दुसंज्ञो भवति। शालीयः। ऐतिकायनीयः। औपगवीयः। अच्स्विति हलामविवक्षार्थं। आदिग्रहणं किं? सभासंनयने जातः सभासंनयनः। ऐबिति किं? दत्तस्यायं दात्तः। दुप्रदेशाः "दोऽच्छः" इत्यादयः।

+देश एवैङ् शैषिके ॥ ८४ ॥ यस्य शब्दस्य देशे एव वर्त्तमानस्य अचामाद्यच् एङ् स दुसंज्ञो भवति शैषिके त्ये कर्तव्ये। सैपुरिकी। सैपुरीका। ठञ्ञिठौ। भोजकटीयः। देशे किं? दैवनंदिनं।

*प्राग्देशे ॥ ८५ ॥ पूर्वदेशे वर्तमानस्य यस्य शब्दस्याचामाद्यच् एङ् स दुसंज्ञो भवति शैषिके त्ये कर्तव्ये। एणीपचनीयः। गोनर्दीयः।

त्यदादिः ॥ ८६ ॥ त्यदादयो दुसंज्ञकाः भवंति। त्यदीयं। तदीयं। किमीयं।

*वा खोः ॥ ८७ ॥ खोर्वा दुसंज्ञा स्यात्। देवनंदीयं। दैवनंदिनं। पद्मनंदीयं। पाद्मनंदिनं।

*तत्तस्सात्त्राशस्कृत्वस्सुज्वद्धाम्क्त्वामृतुमसुम्मिङाभत्यन्यक्स्वारादयो झिः ॥८८॥

तत् तस् सात् त्रा शस् कृत्वस् सुच् वत् धा आम् क्त्वा अम् तुम् इत्येतदंताः सुम्मिङ्प्रतिरूपाः तिसंज्ञाः अन्यंचः प्रधानभूताः स्वरादयश्च झिसंज्ञका भवंति। तदिति प्रत्याहारः। "कायास्तासिः" इत्यारभ्य आ "एधात्" तकारेण। तत्-द्वेधा। तस्-पीलुमूलतः। सात्-भस्मसात्। त्रा-राजत्रा वसति। शस्-बहुशः। कृत्वस्-शतकृत्वः। सुच्-द्विः, त्रिः। वत्-मुनिवत् वृत्तं। धा-बहुधा। आम्-ईहांचक्रे। किंतमां। किंतरां। क्त्वा-कृत्वा। अम्-भोजं भोजं। स्वादुंकारं। तुम्-कर्तुं। सुम्मिङाभ-रात्रौ। मात्रायां। अस्ति। स्वस्ति। ति-अदःकृत्य। अन्यक्स्वरादि-स्वः तिष्ठति। स्वः पश्यति। परमोच्चैः। अन्यगिति किं? अत्युच्चैसौ। अत्युच्चैसः। झिप्रदेशाः "झेः" इत्यादयः।

*गाङ्कुटामञ्णि ङिद्वत् ॥ ८९ ॥ गाङः कुटादीनां च अञ्णिति त्ये परतः ङितीव कार्यं भवति। अध्यगीष्ट। अध्यगीषातां। कुटिता। कुटितुं। कुटितव्यं। कुटित्वा। पुटिता। पुटितुं। पुटितव्यं। पुटित्वा। "अञ्ण" इति किं? उत्कोटकः। उत्कोटः। उत्कोटयति।

*इटि विजः ॥ ९० ॥ विजेर्धरिडादौ त्ये ङिद्वत् भवति। उद्विजिता। उद्विजितव्यं। इटीति किं? उद्वेगः।

**वोर्णोः** ॥ ९१ ॥ ऊर्णोरिडादौ स्ये ङिद्वद् वा स्यात् । प्रोर्णविता । प्रोर्णुविता ।

***गेऽपि** ॥ ९२ ॥ पिद्वर्जिते गे ङिद्वद् भवति । जाग्रति । मृजंति । ग इति किं? जागरिता । मार्ष्टा । अपीति किं ? जागर्ति । मार्ष्टि ।

***लिटींध्यस्फात् किद्वत्** ॥ ९३ ॥ इंधेरन्त्यस्माच्च धोरस्फांतात् अपिति लिटि किद्वद् भवति । समीधे । समिधाते । निन्यतुः । निन्युः । ममृजतुः । ममृजुः । लिटीति किं ? इंधिता । नेता । अस्फादिति किं? दध्वंसे । कित्करणं किं? ईजतुः । ईजुः ।

**+स्वंजेर्वा** ॥ ९४ ॥ स्वंजेर्लिटि किद्वत् कार्यं वा स्यात् । परिषस्वजे । परिषस्वंजे ।

**मृडमृद्गुधकुषवद्वसः क्त्वि** ॥ ९५ ॥ मृडादीनां क्त्वाख्ये परतः किद्वद् कार्यं भवति । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । उदित्वा । उषित्वा । नियमार्थोऽयं योगः । एषामेव सेट्क्त्वाख्ये किद्वत् । देवित्वा । सेवित्वा । वर्तित्वा । वर्द्धित्वा ।

**क्लिशः** ॥ ९६ ॥ क्लिशः क्त्वि किद्वद् भवति । क्लिशित्वा ।

***रुद्विद्मुषग्रहस्वप्प्रच्छां सनि च** ॥९७॥ रुदादीनां सनि क्त्वि च परे किद्वद् स्यात् । रुरुदिषति । रुदित्वा । विविदिषति । विदित्वा । मुमुषिषति । मुषित्वा । जिघृक्षति । गृहीत्वा । सुषुप्सति । सुप्त्वा । पिपृच्छिषति । पृष्ट्वा ।

***सीकः** ॥ ९८ ॥ इगंतस्य धोः सकारादौ सनि परतः किद्वद् भवति । चिचीषति । रुरूषति । तितीर्षति । सीति किं? शिशमिषते । इक इति किं? पिपासति ।

***हलि** ॥ ९९ ॥ सकारादौ सनि यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । बिभित्सति । बुभुत्सते । विवृत्सति । इक इति किं ? विवप्सति ।

***सिलौ दे** ॥ १०० ॥ सकारादौ दपरे सिख्ये लिङि च यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । अभित्त । अबुद्ध । भित्सीष्ट । भुत्सीष्ट । सिलाविति किं ? भेत्स्यते । द इति किं ? अद्राक्षीत् । हलीति किं ? अचेष्ट ।

**उः** ॥ १०१ ॥ ऋवर्णांतस्य धोः सिलौ दे परे किद्वद् भवति । अहृत । आस्तीर्ष्ट । हृषीष्ट । आस्तीर्षीष्ट ।

**गमो वा** ॥ १०२ ॥ गमेः सादौ सिलौ दे वा किद्वद् भवति । समगत । समगंस्त । संगसीष्ट । संगंसीष्ट ।

***यमः सौ स्वीकृतौ** ॥ १०३ ॥ यमेः स्वीकृतौ दारपरिग्रहे सादौ सिख्ये दे वा किद्वद् स्यात् । उपायंस्त भार्यां । साविति किं? उपायंसीष्ट । स्वीकृताविति किं ? आयंस्त पादौ ।

***सूचने** ॥ १०४ ॥ यमेः सूचने प्रकाशने सादौ सौ दे किद्वद् कार्यं भवति । उदायत । उदायसातां ।

***घ्नः** ॥१०५॥ हंतेः सादौ दे परे सौ किद्वद् भवति । आहत । आहसातां । आहसत ।

**भुस्थोरिः** ॥ १०६ ॥ भुसंज्ञकानां तिष्ठतेश्च सादौ सौ दे इत्वं भवति किद्वच्च । अदित । अधित । प्रास्थित । भुस्थोरिति किं ? व्यत्यदास्त ।

***सेट्ते पूङ्शीङ्डीङ्स्विन्मिद्क्ष्विद्धृषो न** १०७ पूङादीनां सेटि तसंज्ञे परे किद्वद् कार्यं न भवति । पवितः । पवितवान् । शयितः । शयितवान् । डयितः । डयितवान् । प्रस्वेदितः । प्रस्वादतवान् । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । सेड्ग्रहणं किं ? पूतः । पूतवान् । मिन्नः । मिन्नवान् ।

**मृषः स्वार्थे** ॥ १०८ ॥ मृषः स्वार्थे तितिक्षायां सेट्ते किद्वद् कार्यं न भवति । मर्षितः । स्वार्थे इति किं ? अपमृषितं वाक्यमाह ।

**वोदुङो भावारंभे शपः** ॥ १०९ ॥ उदुङो धोः शप्विकरणात् भावे आरंभे च सेट्ते किद्वद् कार्यं वा न भवति । द्युतितं । द्योतितमनेन प्रद्युततः । प्रद्योतितः । "उदुङः" इति किं? विदितमनेन । प्रविदितः । भावारंभ इति किं ? रुचितः कार्षापणः । शप इति किं ? गुधितमनेन । प्रगुधितः ।

***नोङ्थफवंचिलुंच्यृतितृषमृषकृशः क्त्वि** ॥ ११० ॥ नकारोङः थकारफकारयोः घ्वोः वंच्या-

दीनां च सेटि क्त्वाल्ये किद्वद् वा भवति । ग्रथित्वा । ग्रंथित्वा । श्रथित्वा । श्रंथित्वा । गुफित्वा । गुंफित्वा । वचित्वा । वंचित्वा । लुचित्वा । लुंचित्वा । ऋतित्वा । अर्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । नोङ्ग्रहणं किं ? कोथित्वा । गोफित्वा । थफग्रहणं किं? ध्वंसित्वा । क्त्वीति किं? ग्रथितः ।

***व्युङोऽवो हलः सन्क्त्वोः ॥ १११ ॥** उकारेकारोङोः धोरवकारांतस्य हलादेः सेटि सनि क्त्वाल्ये च किद्वद् वा स्यात् । दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । व्युङ इति किं ? विवर्त्तिषते । वर्त्तित्वा । अव इति किं ? सिसेविषते । सेवित्वा । हलादेरिति किं? एषिषिषति । एषित्वा । सेटीति किं? बुभुक्षते । भुक्त्वा ।

**युक्तवदुशि लिंगसंख्ये ॥ ११२ ॥** उशर्थे युक्त इव लिंगसंख्ये भवतः । प्रत्ययार्थेन युक्तत्वात् प्रकृत्यर्थो युक्त इत्युच्यते । पंचालानां निवासो जनपदः पंचालाः । अंगाः । वंगाः । कालिंगाः । कुरवः । उशीति किं? आमलकं फलं । लिंगसंख्य इति किं ? बदर्या अदूरभवो बदरी ग्रामः । तस्य वनं बदरीवनं ।

**+द्योरेव बहोः । ११३ ।** से द्युभूतस्यैव बहुविषयस्य युक्तवदुशि लिंगसंख्ये स्तः । मथुराश्च पंचालाश्च मथुरापंचालाः । द्योरेवेति किं? पंचालमथुरे । बहोरिति किं? गोदमथुराः ।

**×जंबूखलतिकादिषु ते ॥११४॥** जंब्वादिषु खलतिकादिषु च यथासंख्यं ते लिंगसंख्ये युक्तवदुशि भवतः । जम्ब्वा अवयवो जंबूः । जम्ब्वौ । जंब्वः फलानि । द्राक्षाः फलानि । मल्लिकाः पुष्पाणि । खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि ।

**+गुणानामजातेः ॥११५॥** गुणानां विशेषणवाचिनां जातेरन्यस्य विशेष्यस्य लिंगसंख्ये स्तः । गुणश्चतुर्धा । मृदुकृद्धृत्सभेदात् । शुक्लं वस्त्रं । शुक्लः पटः । शुक्ला शाटी । कृतं वस्त्रं । कृतः पटः । कृता शाटी । माथुरं कुलं । माथुरः पुमान् । माथुरी स्त्री । निर्मधुरं कुलं । निर्मधुरः पुमान् । निर्मधुरी स्त्री । गुणानामिति किं ? बदरी वृक्षः । "अजातेः" इति किं ? पंचालाः जनपदः ।

**×न नृशि ॥११६॥** नरि मनुष्येऽर्थे उशि गुणानां लिंगसंख्ये न स्तः । चंचेव मनुष्याः चंचाः अभिरूपः । नृग्रहणं किं ? पंचालाः रमणीयाः बह्वन्नाः । बह्वध्यापकाः । बहुक्षीरघृताः । बहुमाल्यफलाः । उशीति किं ? पट्वी नारी ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां प्रथमस्याध्यायस्य प्रथमः पादः ।

## प्रथमाध्याये द्वितीयः पादः ।

**भूवादयो धुः ॥१॥**[1] भू इत्येवमादयः शब्दाः धुसंज्ञा भवंति । भू एधै स्पर्द्धं गाधृ । भवति । एधते । स्पर्द्धते । गाधते । धुप्रदेशाः "धोर्यङ्" इत्येवमादयः ।

**अकर्मको धिः ॥ २ ॥** अकर्मको यो धुः स धिसंज्ञो भवति । अविद्यमानकर्मकोऽविवक्षितकर्मकोऽप्यकर्मकः । धिप्रदेशाः "धेः" इत्येवमादयः ।

**अप्रयोगीत् ॥ ३ ॥** शास्त्रे कार्यार्थमुपदिश्यमानो वर्णः प्रयोगे न श्रूयते यः स इत्संज्ञो भवति । अण्—अच्—हल्—ञिमिदा—डे-णचलञिङः । इत्प्रदेशाः "सात्मेतादिः" इत्येवमादयः ।

**यथासंख्यं समाः ॥ ४ ॥** समाः शिष्यमाणाः यथासंख्यं भवंति । मिप्थस्थस्थतसोऽतंततां । प्रथमसंख्यस्य मिपः प्रथमसंख्योऽमित्यादि ।

**स्वरितेनाधिकारः ॥ ५ ॥** स्वरितेनाचार्यप्रतिज्ञया अधिकारो वेदितव्यः । "स्यः" "परः" इत्यादि ।

***ङैदितो दः ॥ ६ ॥** ङकारेतः ऐकारेतश्च धोर्दो भवति । शीङ्—शेते । इङ्—अधीते । एधै—एधते । आसे—आस्ते ।

**ङौ ॥ ७ ॥** ङावर्थे दो भवति । भूयते भवता । आस्यते भवता । क्रियते कटः । ह्रियते भारः ।

[1] भूवादीनां वकारोऽयं लक्षणार्थः प्रयुज्यते ।
व्यवधानमिको यण्भिर्वायुवंबरयोरिव ॥ १ ॥
भुवो वार्थं वदंतीति वादेरौणादिके इणि ।
भूवादय इति ज्ञेया भुवोऽर्था वादयोऽथवा ॥ २ ॥

**कर्तरि ञे** ॥ ८ ॥ कर्तरि कारके ञार्थे दो भवति। व्यतिभवंते। व्यतिष्ठनंते। व्यतिपचंते।

**+ह्रवहः** ॥ ९ ॥ ह्रवहिभ्यां कर्तरि ञे दो भवति। संप्रहरंते राजानः। व्यतिवहंते नद्यः।

***न गतिहिंसाशब्दे** ॥१०॥ गतौ हिंसायां शब्दे चार्थे वर्तमानाद्धोः कर्तरि ञे दो न भवति। व्यतिगच्छंति। व्यतिधावंति। व्यतिहिंसंति। व्यतिघ्नंति। व्यतिशब्दयंति। व्यतिजल्पंति।

**परस्परान्योऽन्येतरेतरे** ॥ ११ ॥ एतैर्योगे ञार्थे दो न भवति। परस्परस्य व्यतिलुनंति। अन्योऽन्यस्य व्यतिपुनंति। इतरेतरस्य व्यतिभवंति।

**+गेर्वोह्यसोः** ॥ १२ ॥ गेः पराभ्यां ऊहसिभ्यां दो वा स्यात्। समूहति। समूहते। निरस्यति। निरस्यते। गेरिति किं? ऊहते। अस्यति।

**निविशः** ॥ १३ ॥ निपूर्वाद्विशेर्दो भवति। निविशते। निविशाते। निविशंते।

**परिव्यवक्रियः** ॥ १४ ॥ पर्यादिभ्यः क्रीणातेर्दो भवति। परिक्रीणीते। विक्रीणीते। अवक्रीणीते।

***विपरो जेः** ॥ १५ ॥ विपराभ्यां जयतेर्दो भवति। विजयते। पराजयते।

**क्रीडोऽनुपर्याङः** ॥ १६ ॥ अन्वादेः क्रीडेर्दो भवति। अनुक्रीडते। परिक्रीडते। आक्रीडते।

**समोऽकूजे** ॥ १७ ॥ संपूर्वात् क्रीडेर्दो भवत्यकूजेऽर्थे। संक्रीडते। अकूज इति किं? संक्रीडंति शकटानि।

***क्ष्णोः** ॥ १८ ॥ क्ष्णोतेर्दो भवति। संक्ष्णुते। संक्ष्णुवाते। संक्ष्णुवते शस्त्रं।

***गिरादोमि** ॥ १९ ॥ समः गिरतेर्दो भवत्योमि प्रतिज्ञाने। संगिरते सर्वज्ञं। ओमीति किं? संगिरति ग्रामं।

***स्थः** ॥ २० ॥ तिष्ठतेरोमि दो भवति। सर्वमनेकांतात्मकमातिष्ठते।

***संव्यवप्रात्** ॥ २१ ॥ समादिपूर्वात् तिष्ठतेर्दो भवति। संतिष्ठते। वितिष्ठते। अवतिष्ठते। प्रतिष्ठते।

**ज्ञीप्सास्थेयोक्तौ** ॥ २२ ॥ ज्ञीप्सायां परपरितोषार्थमात्मरूपादिप्रकाशने स्थेयोक्तौ च संशय्य विवादं कृत्वा वा निश्चयकरणे स्थो दो भवति। तिष्ठते कन्या छात्रेभ्यः। त्वयि तिष्ठते। मयि तिष्ठते निर्णयः।

**उद ईहे** ॥ २३ ॥ उत्पूर्वात् स्थो दो भवति ईहेऽर्थे। धर्मे उत्तिष्ठते। ईह इति किं? आसनादुत्तिष्ठति।

***मंत्रेणोपात्** ॥२४॥ उपात् स्थो दो भवति मंत्रेण करणभूतेन चेत् सोपस्थितिः। जगत्या उपतिष्ठते। तृष्टुभा उपतिष्ठते। मंत्रेणेति किं? भर्त्तारमुपतिष्ठति भार्या यौवनेन।

**+देवार्चासंगममैत्रीपथिषु** ॥२५॥ उपात् स्थो दो भवति देवार्चादिषु। अजितनाथमुपतिष्ठते। यमुना गंगामुपतिष्ठते। महामात्रानुपतिष्ठते। अयं पंथाः स्रुघ्नमुपतिष्ठते।

**+वा लिप्सौ** ॥ २६ ॥ उपात् स्थो लिप्सावर्थे दो वा भवति। भिक्षुर्दातृकुलमुपतिष्ठते, उपतिष्ठति वा।

**धेः** ॥ २७ ॥ उपात् स्थो धेर्दो भवति। ज्ञानं ज्ञेयेषूपतिष्ठते। धेरिति किं? स्वामिनमुपतिष्ठति।

**समो गमृप्रच्छिस्वृच्छिश्रुविदृदृशः**॥२८॥ संपूर्वेभ्यो गमादिभ्यो धिभ्यो दो भवति। संगच्छते। संपृच्छते। संस्वरते। समियृते। समरिष्यते। समृच्छते। संशृणुते। संवित्ते। संपश्यते। धेरिति किं? संगच्छति ग्रामं। संपश्यति देवं। संवेत्ति धर्मं।

**निसंव्युपाङ्ह्वः** ॥ २९ ॥ न्यादिभ्यो ह्वयतेर्दो भवति। पुत्रं निह्वयते। संह्वयते। विह्वयते। उपह्वयते।

**आङः स्पर्द्धे** ॥३०॥ आङ्पूर्वाद् ह्वो दो भवति स्पर्द्धेऽर्थे। मल्लो मल्लमाह्वयते। स्पर्द्धे इति किं? गामाह्वयति गोधुक्।

**+गमेः प्रतीक्षे** ॥ ३१ ॥ गमेर्ण्यंतादाङ्पूर्वाद्दो भवति प्रतीक्षे कालहरणे। आगमयस्व तावत्। प्रतीक्ष इति किं? विद्यामागमयति।

+नुप्रच्छः ॥ ३२ ॥ आङ्पूर्वाभ्यां नुप्रच्छाभ्यां दो भवति । आनुते शृगालः । आपृच्छते गुरून् ।

*दाञः ॥ ३३ ॥ ददातेराङ्पूर्वाद्दो भवति । विद्यामादत्ते । धनमादत्ते ।

*न व्यसने ॥ ३४ ॥ दाञो दो न भवति व्यसने विकसनेऽर्थे । विपादिकां व्याददाति ।

+स्वांगकर्मकात् ॥ ३५ ॥ दाञः स्वांगकर्मकात् व्यसनेऽर्थे दो न भवति । आस्यं व्याददाति । स्वांगकर्मकादिति किं ? व्याददते पिपीलिका पतंगमुखं ।

*यमूह्नो धेश्च ॥ ३६ ॥ यमेर्हतेश्च धिसंज्ञकात् स्वांगकर्मकाच्चाङ्पूर्वाद्दो भवति । आयच्छते । आयच्छेते । आहते । आघ्नाते । आघ्नते । आयच्छते पाणिं । आहते वक्षः । धेरिति किं ? आयच्छति रज्जुं । आहंति पापं ।

*व्युत्तपश्च ॥ ३७ ॥ व्युद्भ्यां तपेर्दो भवति धेः स्वांगकर्मकाच्च । वितपते । उत्तपते राजा । वितपते पृष्ठं । धेरित्येव । उत्तपति सुवर्णं सुवर्णकारः ।

*वेः कुः ॥३८॥ विपूर्वात् कृञो धेर्दो भवति । विकुर्वते सैंधवाः साधुदांताः । अन्नस्य पूर्णाः छात्राः विकुर्वते ।

*शब्दकर्मणः ॥ ३९ ॥ वेः कृञो दो भवति शब्दकर्मकात् । क्रोष्टा विकुरुते स्वरान् । ध्वांक्षो विकुरुते स्वरान् । शब्दकर्मण इति किं? विकरोति कटं ।

*गंधनावक्षेपसेवान्यायप्रतियत्नप्रकथोपयोगे ॥ ४० ॥ एष्वर्थेषु कृञो दो भवति । अयमिममुत्कुरुते । श्येनो वर्त्तिकामुपकुरुते । गणकान् प्रकुरुते । परदारान् प्रकुरुते । कांडं गुणस्योपस्कुरुते । जनापवादान् प्रकुरुते । शतं प्रकुरुते धर्माय । एष्विति किं ? धर्मं करोति ।

प्रसहनेऽधेः ॥ ४१ ॥ अधिपूर्वात् कृञो दो भवति प्रसहने पराभिभवेऽर्थे । वादिनोऽधिकुरुते । शत्रूनधिकुरुते । प्रसहन इति किं ? अधिकरोति ।

*पूजोत्संगोपनीतिज्ञानभृतिगणनव्यये न्यः॥४२
पूजादिष्वर्थेषु नयतेर्दो भवति । नयते चार्वी स्याद्वादे । बालकमुदानयते । माणवकमुपनयते । नयते चार्वी तत्त्वार्थे । कर्मकरानुपनयते । भृतिदानेन स्ववशीकरोति । मद्रकाः कारं विनयंते । राजग्राह्यं भागं निर्यातयंतीत्यर्थः । शतं विनयते । व्ययीकरोति । एष्विति किं ? नयत्यजां ग्रामं ।

*कर्तृस्थे कर्मण्यमूर्त्तौ शमे ॥ ४३ ॥ कर्तृस्थेऽर्थे कर्मणि मूर्त्तिवर्जिते विवक्षिते नयतेर्दो भवति शमेऽर्थे । क्रोधं विनयते । हर्षं विनयते । कर्तृस्थे इति किं ? मुनिः परस्य क्रोधं विनयति । कर्मणीति किं ? बुद्ध्या विनयति । अमूर्त्ताविति किं ? गडुं विनयति । शम इति किं ? क्रोधमानयति ।

+हृगतिताच्छील्ये ॥ ४४ ॥ हरतेर्दो भवति गतेस्ताच्छील्ये । पैतृकमश्वा अनुहरंते । मातृकं गावोऽनुहरंते । गतिस्वभावमनुकुर्वंति ।

+शिक्षशक्नाथेर्जिज्ञासोपलंभनाशिषि ॥४५॥
शिक्षादिभ्यो जिज्ञासादिषु दो भवति । शकेः सन्नंतात् शिक्षा । जिज्ञासायां-विद्यां शिक्षते । तुभ्यं शपते । सर्पिषो नाथते । एष्विति किं ? भोक्तुं शिक्षति ।

वृत्तिसर्गतायने क्रमः ॥ ४६ ॥ वृत्त्यादिष्वर्थेषु क्रमेर्दो भवति । तत्त्वेऽस्य क्रमते बुद्धिर्न प्रतिबध्यत इत्यर्थः । जैनेंद्राध्ययनाय क्रमते उत्सहत इत्यर्थः । क्रमंतेऽस्मिन् शास्त्राणि संतन्यंते पाल्यंते वा ।

परापात् ॥ ४७ ॥ वृत्त्यादिषु परोपाभ्यां क्रमेर्दो भवति । पराक्रमते । उपक्रमते ।

ज्योतिरुद्गतावाङः ॥ ४८ ॥ आङ्पूर्वात् क्रमेर्दो भवति ज्योतिषां सूर्यादीनामुद्गमनेऽर्थे । आक्रमते सूर्यः । आक्रमते चंद्रः । ज्योतिरुद्गताविति किं ? शिशुराक्रामति कुतपं ।

वेः स्वार्थे ॥ ४९ ॥ विपूर्वात् क्रमेः स्वार्थे दो भवति । सुष्ठु विक्रमते । साधु विक्रमते । स्वार्थे इति किं ? विक्रामत्यजिनसंधिः ।

*प्रोपात् समर्थात् ॥ ५० ॥ प्रोपाभ्यां समर्थाभ्यां क्रमेर्दो भवति । प्रक्रमते । उपक्रमते भोक्तुं । प्रारभते इत्यर्थः ।

वाऽगेः ॥ ५१ ॥ अगिपूर्वाद् क्रमेर्दो भवति वा । क्रमते, क्रामति । अगेरिति किं ? संक्रामति ।

*संप्रतेर्ज्ञोऽस्मृतौ ॥ ५२ ॥ संप्रतिभ्यां जानातेर्दो भवत्यस्मृतावर्थे। संजानीते। प्रतिजानीते शतं। अस्मृताविति किं ? मातुः संजानाति।

*निह्नवे ॥ ५३ ॥ निह्नवेऽपलापेऽर्थे ज्ञो दो भवति। शतमपजानीते। सहस्रमपजानीते। निह्नव इति किं ? न त्वं किमपि जानासि।

धेः ॥ ५४ ॥ ज्ञो धिसंज्ञकाद्दो भवति। दध्नो जानीते। सर्पिषो जानीते। धेरिति किं ? स्वरेण पुत्रं जानाति।

दीप्त्युपोक्तिज्ञानेहविमत्युपमंत्रे वदः ॥५५॥ दीप्त्यादिषु वदेर्दो भवति। वदते चार्वी तत्त्वार्थे। कर्मकरानुपवदते। वदते विद्वान् स्याद्वादे। तपसि वदते। गेहे विवदंते। परदारानुपवदते।

व्यक्तवाक्समुक्तौ ॥ ५६ ॥ व्यक्तवाचां समुक्तौ सहोक्तौ वदेर्दो भवति। संप्रवदंते ग्राम्याः। संप्रवदंते साधवः। व्यक्तवागिति किं ? संप्रवदंति चटकाः।

अनोर्धेः ॥ ५७ ॥ धिसंज्ञकादनुपूर्वाद्वदेर्दो भवति। आचार्यस्यानुवदते शिष्यः। धेरिति किं ? प्रागुक्तमनुवदति।

*वा व्युक्तौ ॥ ५८ ॥ व्युक्तौ विवादे वदेर्वा दो भवति। विप्रवदंते वादिनः विप्रवदंति वा। व्युक्ताविति किं ? संप्रवदंति साधवः।

गिरोऽवात् ॥५९॥ अवपूर्वाद्गिरतेर्दो भवति। अवगिरते। अवगिरंते।

उच्चरोऽधेः ॥ ६० ॥ उत्पूर्वाच्चरतेर्दो भवत्यधेः। गुरुवाचमुच्चरते। अपूपानुच्चरते। अधेरिति किं ? वाष्प उच्चरति।

समो भया ॥ ६१ ॥ संपूर्वाच्चरतेर्दो भवति भातेन योगे। अश्वेन संचरते। रथेन संचरते। भयेति किं ? त्रैलोक्यं संचरति जिनधर्मः।

+दाणोऽसत्कृत्येऽवर्थया ॥ ६२ ॥ दाणः संपूर्वाद्दो भवत्यसत्कृत्येऽशिष्टव्यवहारेऽवर्थया भया योगे। दास्या संप्रयच्छते कामुकः। असत्कृत्ये इति किं ? भार्यायै संप्रयच्छति। अवर्थयेति किं ? पाणिना संप्रयच्छति। ज्ञापकमिदमेवावर्थेऽशिष्टव्यवहारे भापि भवतीति।

स्वीकृतावुपाद्यमः ॥ ६३ ॥ उपपूर्वाद् यमेर्दो भवति स्वीकृतौ पाणिग्रहणे। कन्यामुपयच्छते। स्वीकृताविति किं ? देवदत्तस्य भार्यामुपयच्छति यज्ञदत्तः।

अस्मृदृशः सनः ॥ ६४ ॥ एभ्यः सन्नंतेभ्यो दो भवति। शुश्रूषते। सुस्मूर्षते। दिदृक्षते देवान्।

ज्ञः ॥ ६५ ॥ जानातः सन्नंताद्दो भवति। जिज्ञासते धर्मं।

नाऽनोः ॥ ६६ ॥ अनुपूर्वाज्जानातेर्दो न भवति सन्नंतात्। अनुजिज्ञासति।

प्रत्याङ्श्रोः ॥ ६७ ॥ प्रत्याङ्भ्यां शृणोतेः सन्नंताद्दो न भवति। प्रतिशुश्रूषति। आशुश्रूषति।

शदेर्गात् ॥ ६८ ॥ शदेर्गविषयाद्दो भवति। शीयते। शीयेते। शीयंते। गादिति किं ? अशत्स्यत्। शशाद।

*मुर्लुङ्लिङोश्च ॥ ६९ ॥ म्रियतेर्दो भवति लुङ्लिङोः गपराच्च। अमृत। मृषीष्ट। म्रियते। म्रियतां। अम्रियत। म्रियेत। लुङ्लिङोश्चेति किं ? मरिष्यति। अमरिष्यत्। ममार।

*प्राग्वत्सनः ॥७०॥ प्राग्वत् प्राचीनदानिमित्तप्रकृतिवत् सन्नंतात् दो भवति। ङैदितो दः। शेते। शिशयिषते। स्पर्द्धते। पिस्पर्द्धिषते। निविशः। निविशते। निविविक्षते। आक्रमते आदित्यः। आचिक्रंसते। सार्पिषो जानीते। सर्पिषो जिज्ञासते। प्राग्वदिति किं ? शिशत्सति। मुमूर्षति। दनिमित्तत्र नास्ति।

*आमवत् तत्कृः ॥ ७१ ॥ आमंतस्येव तत्कृञो दो भवति। ईहांचक्रे। ईक्षांचक्रे। तत्कृरिति किं ? ईहांबभूव। ईक्षामास।

+न ॥ ७२ ॥ आमंतात् तत्कृञो दो न भवति। उब्जांचकार।

*ग्युद्युजोऽयज्ञपात्रे ॥ ७३ ॥ ग्युद्भ्यां युजेर्दो

भवत्ययज्ञपात्रे । प्रयुंक्ते । नियुंक्ते । उपयुंक्ते । उद्युंक्ते । अयज्ञपात्र इति किं ? द्वंद्वं यज्ञपात्राणि प्रयुनक्ति । गिना सिद्धे नियमार्थमुद्ग्रहणं । हलंतेषु—उद एव नान्यस्मात् । दुर्युनक्ति । संयुनक्ति ।

***अपस्कृः ॥ ७४ ॥** अपस्किरतेर्दो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । अपग्रहणं किं ? उपस्किरति ।

***भुजोऽत्रे ॥ ७५ ॥** भुजेर्दो भवत्यत्रेऽपालने । भुंक्ते । भुंजाते । भुंजते । अत्र इति किं ? भुनक्ति भरतः क्ष्मां ।

***नाऽणौ धेः प्राणिकर्तृकाण्णेः ॥ ७६ ॥** अण्यंतावस्थायां यो धुर्धिः प्राणिकर्तृकस्तस्माण्ण्यंताद्दो न भवति । आस्ते देवदत्तः । आसयति देवदत्तं । शेते माणवकः । शाययति माणवकं । अणाविति किं ? आरोहयमाणं प्रयोजयति आरोहयते । धेरिति किं ? कटं कुर्वाणं प्रयोजयति कारयते । प्राणिकर्तृकादिति किं ? शुष्यंति व्रीहयः शोषयते व्रीहीनातपः । "णिचः" इति प्राप्तिः प्रतिषिद्ध्यते ।

***यत्कर्म चेत् कर्ताऽनात्माऽस्मृतौ ॥ ७७ ॥** अण्यंताद्यो णिः तदंताद्दो भवत्यस्मृतावनाध्याने । णिप्रकृतेरणौ यत् कर्म स चेत् कर्ता अनात्मा स्यात् । पश्यंति भृत्याः राजानं । दर्शयते भृत्यान् राजा स्वयमेव । यत्कर्मेति किं ? लुनाति दात्रेण लावयति दात्रं स्वयमेव । कर्तेति किं ? आरोहंति हस्तिनं हस्तिपकाः । आरोहयत्येनं महामात्रः । अनात्मेति किं ? हंत्यात्मानं । घातयत्यात्मा । अस्मृताविति किं ? स्मरति वनगुल्मं कोकिलः । स्मारयत्येनं वनगुल्मः ।

***भीस्मेर्हेतुभये ॥ ७८ ॥** ण्यंताभ्यां भीस्मिभ्यां दो भवति हेतुभयेऽर्थे । मुंडो भीषयते । जटिलो भीषयते । मुंडो विस्मापयते । हेतुभय इति किं ? कुंचिकयैनं भाययति ।

**वंचने गृधिवंचेः ॥ ७९ ॥** गृधिवंचिभ्यां ण्यंताभ्यां दो भवति वंचने विसंवादनेऽर्थे । गर्द्धयते । वंचयते माणवकं । प्रतारयतीत्यर्थः । वंचन इति किं ? श्वानं गर्द्धयति । अहिं वंचयति ।

***ल्योऽर्चाऽधार्ष्ट्ये च ॥ ८० ॥** लिनातिलीयतिभ्यां ण्यंताभ्यां दो भवत्यर्चायामधार्ष्ट्ये वंचने च । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । कस्त्वामुल्लापयते ।

***मिथ्याकृञोऽभ्यासे ॥ ८१ ॥** मिथ्याशब्देन योगे कृञो ण्यंताद्दो भवत्यभ्यासेऽर्थे । पदं मिथ्या कारयते । स्तुतिं मिथ्या कारयते । मिथ्येति किं ? सूत्रं साधु कारयति । अभ्यास इति किं ? सकृत्पदं मिथ्या कारयति ।

***ञितः फलेशे ॥ ८२ ॥** ञितो धोर्दो भवति क्रियायाः फलेशे कर्तरि । पचते । लुनीते । कुरुते । फलेशे इति किं ? पचंति भक्तिकराः । वपंति भृतकाः ।

**वदोऽपात् ॥ ८३ ॥** अपाद् वदेर्दो भवति फलेशे । एकांतवादमपवदते । अपवदेते ।

**समुदाङ्यमोऽग्रंथे ॥ ८४ ॥** समादिभ्यो यमेर्दो भवत्यग्रंथेऽर्थे । व्रीहीन् संयच्छते । भारमुद्यच्छते । पादमायच्छते । अग्रंथे इति किं ? उद्यच्छति चिकित्सां वैद्यः ।

**ज्ञोऽगेः ॥ ८५ ॥** जानातेरगेर्दो भवति । गां जानीते । अश्वं जानीते । अगेरिति किं ? स्वर्गं प्रजानाति ।

**णिचः ॥ ८६ ॥** णिजंताद्धोर्दो भवति फलेशे । ओदनं पाचयते । कटं कारयते । फलेशे इति किं ? परस्य कटं कारयति ।

**पादम्याङ्यमाङ्यसपरिमुहरुचिनृतेद्वद्वसः ॥ ८७ ॥** पादिभ्यो ण्यंतेभ्यो दो भवति । पाययते । आदयते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । धापयते । वादयते । वासयते ।

**वा वाग्गम्ये ॥ ८८ ॥** वाचा पदांतरेण गम्यमाने फलेशे दो वा भवति । स्वं धान्यं पुनीते पुनाति वा । स्वं वाक्यमपवदते, अपवदति वा । स्वान् व्रीहीन् संयछते, संयच्छति वा । स्वां गां जानीते, जानाति वा । स्वमन्नं पाचयते, पाचयति वा । स्वं पुत्रं पाययते, पाययति वा । गतैः षड्भिर्योगैर्नित्यं दे प्राप्ते वाचा योगेऽनेन विकल्पः ।

*ङ्याः ॥ २०८ ॥ ङीत्यांतस्य महतः करादिष्वाङ् भवति । महत्याः करः-महाकरः। महाभासः । महाविशिष्टः ।

*अष्टनोऽबाशीत्योःस्यौ प्राक्शतात् त्रेस्त्रयः ॥२०९॥ द्वि अष्टन् इत्येतयोराङ् भवति । स्थिसंज्ञे धौ परत, शतात् प्राक् त्रेस्त्रयस् बसमशीतिं च वर्जयित्वा । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । व्यष्टनः त्रेरिति किं? चतुर्दश । अबाशीत्योरिति किं ? द्वित्राः । अष्टदशाः। त्रिदशाः ।द्व्यशीतिः त्र्यशीतिः। प्राक्शतादिति किं ? द्विशतं । द्विसहस्रं । अष्टशतं । अष्टसहस्रं । त्रिशतं । त्रिलक्षं ।

वा चत्वारिंशदादौ ॥२१० ॥ द्व्यादीनामाङ् वा भवति चत्वारिंशदादौ परतः । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् । द्वापंचाशत् । द्विपंचाशत् । अष्टापंचाशत् । अष्टपंचाशत् । त्रयःपंचाशत् । त्रिपंचाशत् । द्वानवतिः । द्विनवतिः । अष्टानवतिः । अष्टनवति । त्रयोनवतिः । त्रिनवतिः ।

*दशन्येका ॥२११॥ दशनि धौ एकस्य दीर्घो निपात्यते। एकादश। दशनीति किं?एकाविंशतिः।

+षष उर्दतरि चादेर्धोष्टुः ॥२१२॥ षष उर्भवति दतृशब्दे दाशनि च परे धोरादेष्टुश्च । षोडन् । षोडश ।

÷ धात्ये वा ॥२१३॥ षष उत्वं वा धात्ये धोरादेः टुश्च नित्यं स्यात् । षोढा । षड्धा ।

+नस् नासिकायास्तसक्षुद्रे ॥ २१४ ॥ नासिकाशब्दस्य नस् भवति तस्त्ये क्षुद्रे च परतः। नस्तः । नसक्षुद्रः ।

+येऽवर्णे ॥२१५॥ नासिकाया नस् भवति अवर्णे यत्ये परे । नस्यः । अवर्ण इति किं ? नासिक्यो वर्णः ।

हृदयस्य हृल्लेखाण्यलासे ॥ २१६ ॥ हृदयस्य हृद् भवति लेखादिषु परतः । हृल्लेखः। हार्द्दं । हृद्यं । हृल्लासः ।

*पद् पादस्याज्यातिगोपहते ॥ २१७ ॥ पादस्य पदादेशो भवति आज्यादिषु परतः । पदाजिः । पदातिः। पदगः । पदोपहतः ।

पद्ये ॥२१८॥पादस्य पदित्ययमादेशो भवति यत्ये परतः । पद्यं ।

हिमकाषिहतौ ॥ २१९ ॥ पादस्य पद् भवति हिमादिषु परतः। पद्धिमं। पत्काषी। पद्धतिः

*शस्यृचः ॥२२०॥ ऋचः संबंधिनः पादस्य पदादेशो भवति शसि त्ये परे । पच्छः गायत्रीं शंसति । ऋच इति किं ? पादशः श्लोकं कथयति ।

वा निष्कघोषमिश्रशब्दे ॥२२१॥ पादस्य पद् वा भवति निष्कादिषु परतः । पन्निष्कः । पादनिष्कः । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ।

*उदकस्योदैकहलि पूर्ये ॥ २२२ ॥ उदकस्य उद इत्ययमादेशो भवति वा पूर्येऽर्थे एकहलादौ धौ परतः। उदकुंभः । उदककुंभः । उदपात्रं । उदकपात्रं । एकहलीति किं ? उदकस्थाली। पूर्य इति किं ? उदकगिरिः ।

मंथौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे ॥२२३॥ उदकस्योदो भवति वा मंथादिषु परतः उदमंथः। उदकमंथः । उदौदनः । उदकौदनः । उदसक्तुः । उदकसक्तुः। उदबिंदुः । उदकबिंदुः। उदवज्रः।उदकवज्रः।उदभारः । उदकभारः । उदहारः। उदकहारः। उदवीवधः । उदकवीवधः। उदगाहः । उदकगाहः ।

*धिमेघवासवाहने॥ २२४ ॥ धादिषु-

कस्योदो भवति । उदधिः । उदपेषं पिनष्टि । उदवासः । उदवाहनः ।

*धोश्च खौ ॥ २२५ ॥ उदकस्य प्राक्पदस्य धोश्च खावुदो भवति । उदमेघः औदमेघिः । उदवाहः । औदवाहिः । शीतोदा । क्षीरोदा । लवणोदः । कालोदः । खाविति किं ? उदकपर्वतः ।

*वोप् ॥ २२६ ॥ पूर्वपदस्य वोश्च उब्वा स्यात् । देवदत्तः । देवः । दत्तः । भीमसेनः भीमः । सेनः । सत्यभामा । सत्या । भामा ।

*इकः प्रोऽङ्यीयुव्यणङ्के: ॥ २२७ ॥ इगंतस्य प्रो वा स्यात् घौ स चेदिक् ङ्यीत्यः इयुवोः स्थानी यणादेशो ङिश्च न भवति । लक्ष्मीपुत्रः । लक्ष्मिपुत्रः । ग्रामणीपुत्रः।ग्रामणिपुत्रः।यवलूपुत्रः। यवलुपुत्रः।खलपुपुत्रः। खलपूपुत्रः।इक इति किं ? खट्वापादः । अङ्यादेरिति।किं ? गार्गीपुत्रः । भ्रीकुलं, भ्रुकुलं । कौमुदगंधीपतिः । वृषलीभूतं ।

ङ्यापोः क्वचित्खौ ॥ २२८ ॥ ङी आप् इत्येवमंतस्य क्वचित् प्रो भवति । रेवतिमित्रः महित्राता । शिलवहः । मंदुरजं । क्वचिन्न स्यात् । नांदीमुखं । गंगाद्वारं।क्वचिद्द्वयं । पृथिवीदत्तः, पृथिविदत्तः । गंगादेवी । गंगदेवी । क्वचिदन्यत्-तीर्थंकरः तीर्थकरः । ङ्याप इति किं । श्रीपुरं । खाविति किं ? नदीस्रोतः ।

त्वे ॥ २२९ ॥ ङ्यापोस्त्वे क्वचित् प्रो भवति । रोहिणित्वं । रोहिणीत्वं । अजत्वं । अजात्वं ।

*मालेषीकेष्टकस्यांतस्य च भारितूलचिते ॥ २३० ॥ मालादीनां तदंतानां च भार्यादिषु परतः प्रो भवति । मालभारी । मालभारिणी । उत्पलमालभारिणी । इषीकतूलं । गुंजेषीकतूलं । इष्टकचितं । पक्वेष्टकचितं ।

÷भ्रुवः कुटिकुंसेऽश्च ॥२३१॥ कुटिकुंसयोः परतो भ्रुवः प्रो भवति अश्चांतादेशः । भ्रुकुटिः । भ्रकुटिः । भ्रुकुंसः । भ्रकुंसः ।

खित्यङ्केः कृति ॥ २३२ ॥ अजंतस्याङ्केः प्रो भवति खित्कृति परतः । खट्वंमन्या । हरिणिंमन्या । कालिंमन्या । रोहिणिंमन्या । अङ्केरिति किं ? दोषामन्यमहः।दिवामन्या रात्रिः

मुमचः ॥ २३३ ॥ अजंतस्याङ्केः मुम् भवति खित्कृति परतः । जनमेजयः । स्तनंधयः । प्रियंवदः । क्षेमंकरः । अच इति किं ? विद्वन्मन्यः ।

अमेकाचोऽम्वत् ॥ २३४ ॥ एकाचोऽजंतस्याम् भवति खित्कृति अमीव चास्मिन् कार्यं स्यात् । गांमन्यः । स्त्रींमन्यः । नरंमन्यः । एकाच इति किं ? लेखाभ्रूंमन्या । अच इति किं ? विन्मन्यः ।

सत्यागदास्तोः कारे ॥ २३५ ॥ सत्यादीनां कारे परे मुम् भवति । सत्यंकारः । अगदंकारः । अस्तुंकारः ।

*भ्राष्ट्राग्न्योरिंधे ॥ २३६ ॥ इंधे घौ मुम् भवति भ्राष्ट्राग्न्योः । भ्राष्ट्रमिंधः । अग्निमिंधः ।

×भद्रोष्णयोः करणे ॥ २३७ ॥ अनयोः करणे घौ मुम् भवति । भद्रंकरणं । उष्णंकरणं ।

÷गिलगिलगिलयोरगिलस्य ॥ २३८ ॥ गिलांतमुक्तस्याजंतस्य गिलगिलगिलयोः मुम् भवति । तिमिंगिलः । तिमिंगिलगिलः । अगिलस्येति किं ? तिमिंगिलं गिलतीति तिमिंगिलगिलः ।

÷धेनुंभव्यामध्यंदिनलोकंपृणानभ्यासमित्याः ॥२३९॥ धेन्वादीनां भव्यादिषु मुम् निपात्यः । धेनुंभव्या । मध्यंदिनं । लोकंपृणः । अनभ्यासमित्यः ।

*रात्रेः प्रभाचंद्रस्य॥ २४० ॥ रात्रेः कृदंते षौ मुम् भवति प्रभाचंद्रस्याचार्यस्य मतेन । रात्रिंचरः । रात्रिचरः । रात्रिमाटः । रात्र्याटः

नञोऽन् ॥ २४१ ॥ नञः अन् भवति षौ परतः । अधर्मः । अहिंसा । अस्तेयं ।

अचि ॥ २४२ ॥ नञः अजादौ परे अन् भवति । अनुपमो निजः । अनंतः अनादिः । पुनः सूत्रं नकारश्रवणार्थं ।

+क्षेपे मिङि ॥ २४३ ॥ नञोऽन् भवति क्षेपेऽर्थे मिङि । अपचासि त्वं जाल्म । क्षेप इति किं ? नपचसि छात्र ।

*एकादद्नाऽक्षौ ॥ २४४ ॥ एकशब्दाद् नञोऽद्न् अक्षौ स्तः षौ परे । एकेन न विंशतिः एकाद्नविंशतिः । एकान्नविंशतिः । एकाद्नत्रिंशत् । एकान्नत्रिंशत् ।

नगो वाऽजीवे ॥२४५॥ नग इति निपात्यतेऽजीवेऽर्थे वा॥न गछंतीति नगाः।अगाः वृक्षाःपर्वताः। वा । अजीव इति किं ? अगः पुत्रः शीतेन ।

सहस्य सः खौ ॥ २४६ ॥ सहस्य स आदेशो भवति षौ । साश्वत्थं । सपलाशं । खाविति किं ? सहकृत्वा ।

*ग्रंथांताधिकादृश्ये ॥२४७॥ ग्रंथान्तेऽधिकेऽदृश्ये च वर्तमानस्य सहस्य सो भवति षौ परतः । ज्योतिषमधीते । सद्रोणा खारी।साग्निः कपोतः । सपिशाचा वात्या ।

हेऽकाले ॥ २४८॥ हसे सहस्य सो भवति अकाले । सचक्रं धेहि । सधुरं प्राज । अकाल इति किं ? सहपूर्वाह्णं । सहापराह्णं भुंक्ते ।

वा नीचः ॥ २४९ ॥ नीचः सहस्य सो भवति षौ वा । सपुत्रः । सहपुत्रः पिता । सछात्रः । सहछात्रः आगतः । नीच इति किं ? सहकृत्वानी ।

नाशिष्यगोवत्सहले ॥ २५० ॥ सहस्य सो नास्ति आशिषि अगोवत्सहलेषु परतः । स्वस्ति सह संघाय गुरवे।स्वस्ति राज्ञे सहलोकाय। आशिषीति किं ? सछात्रः । अगोवत्सहल इति किं?स्वस्त्यस्तु सगवे सहगवे तुभ्यं।सवत्साय,सहवत्साय तुभ्यं । सहलाय सहहलाय तुभ्यं ।

*समानस्य धर्मादिषु॥२५१॥समानस्य सादेशो भवति धर्मादिषु परेषु । सधर्मा । सपक्षः । सजातीयः । सरूपः । सस्थानः । सवर्णः । सवयः । सनामा । सबंधुरित्यादि ।

सब्रह्मचारी ॥ २५२ ॥ समानस्य सो निपात्यो ब्रह्मचारिणि षौ । समानो ब्रह्मचारी सब्रह्मचारी ।

*घदृग्दृशदृक्षे ॥२५३॥ समानस्य सो भवति घत्वादिषु परतः । सदृक् । सदृशः । सदृक्षः । चग्रहणमुत्तरार्थं ।

किमिदमः कीश् ॥ २५४ ॥ किमिदमोः कीश् इत्येतावादेशौ भवतः घत्वादिषु परतः । कियान् । कीदृग् । कीदृशः । कीदृक्षः । इयान् ईदृक् । ईदृशः । ईदृक्षः ।

*आः ॥ २५५ ॥ पूर्वपदस्यार्थात् त्यदादेश्चाकारादेशो भवति घत्वादिषु परतः । अन्यादृग् । अन्यादृशः । अन्यादृक्षः । तावान् । तादृग् । तादृशः । तादृशी । तादृक्षः। यावान् ।यादृग्। यादृशः । यादृशी । यादृक्षः । भवादृक् । भवादृशः । त्वादृशः । मादृशः । युष्मादृशः । अस्मादृशः ।

*विष्वग्देवस्त्रेष्टेरद्र्यंचौ क्वौ ॥ २५६ ॥ विष्वग्देवयोः स्त्रेश्च टेरद्रिरादेशो भवत्यंचतौ क्व्यंते परतः। विष्वद्र्यङ् । देवद्र्यङ् । सर्वद्र्यङ् । तद्र्यङ् । कद्र्यङ् । युष्मद्र्यङ् । अस्मद्र्यङ् । भवद्र्यङ् । देवद्रीची । सर्वद्रीची । विष्वग्देव-

स्नेरिति किं ? पात्राङ् ।

*संसहयोः समिसध्री ॥ २५७ ॥ संसहस्थाने समिसध्रि इत्येतावादेशौ भवतः अंचतौ क्वौ परतः । सम्यङ् । सध्र्यङ् ।समीची।सध्रीची।

*तिरसः तिर्य्ये ॥ २५८ ॥ तिरसः तिरि इत्ययमादेशो भवति अकारादावंचतौ परतः । तिर्यङ् । तिर्यंचौ । तिर्यञ्चः । तिर्यग्भ्यां । ए इति किं ? तिरश्चः । तिरश्चो ।

*द्व्यंतर्गेरीदपोऽनात् ॥ २५९ ॥ द्व्यंतर्भ्यां अनवर्णांतात् गेश्चापः ईत्वं स्यात् । द्वीपः। अंतरीपं । समीपं । नीपं । वीपं । अनादिति किं ? प्रापं । परापं ।

देशेऽनोरुः ॥ २६० ॥ देशार्थेऽनोः परस्यापः उर्भवति । अनूपः । देशे इति किं ? अन्वीपो ग्रामः ।

छकारकेऽन्यस्य दुक् ॥२६१॥ छे कारके चान्यस्य दुगागमो भवति।अन्यदीयं।अन्यत्कारकं।

* रागोत्सुकोत्याऽस्थितास्थाशाशिष्यताभस्य ॥ २६२ ॥ तांतभांतवर्जितस्यान्यस्य दुगागमो भवति रागादिषु परतः । अन्यद्रागः । अन्यदुत्सुकः । अन्यदूतिः । अन्यदास्थितः । अन्यदास्था । अन्यदाशा । अन्यदाशीः ।अताभस्येति किं ? अन्यस्यान्येन वा रागः---अन्यरागः ।

वाऽर्थे ॥ २६३॥ अताभांतस्यान्यस्यार्थे वा दुग् भवति । अन्यदर्थः । अन्यार्थः ।

+प्यस्येश् बेऽदृत्के मातरि ॥२६४॥प्यांतस्य बसे अकार ऋकार ककारांते मातरि द्यौ वा ईश् भवति । कारीषगंध्या माता अस्य कारीषगंधीमातः । कारीषगंध्यामातः । कारीषगंधीमाता । कारीषगंध्यामाता । कारीषगंधीमातृकः । कारीषगंध्यामातृकः । प्यस्येति किं ? इभ्यामाता । ब इति किं ? कारीषगंध्यामाता ।

*बंधौ ॥ २६५ ॥ प्यस्य बे बंधौ परे ईश् भवति । कारीषगंधीबंधुः । कौमुदगंधीबंधुः ।

*षे पुत्रपत्योः ॥ २६६ ॥ षसे पुत्रपत्योः प्यस्य ईश् भवति । कारीषगंधीपुत्रः । कारीषगंधीपतिः । कौमुदगंधीपुत्रः । कौमुदगंधीपतिः । ष इति किं ? कारीषगंध्यापतिर्ग्रामः । पुत्रपत्योरिति किं ? कारीषगंध्याकुलं ।

कत्कोः षेऽचि ॥२६७॥ कोः कद् भवति षसे अजादौ द्यौ परे । कदजः । कदन्नं । कदशनं । ष इति किं ? किमो राजा । कूष्ट्रः । कश्वः । अचीति किं ? कुभोजनं ।

रथवदे ॥ २६८॥ कोः कद् भवति रथवदयोः परतः । कद्रथः । कद्वदः ।बसेऽपि-कद्रथो राजा । कद्वदः खलः ।

तृणे जातौ ॥ २६९ ॥ कोः कद् भवति तृणे द्यौ जात्यर्थे । कत्तृणं । कुतृणान्यन्यत्र ।

कत्त्रिः ॥ २७० ॥ कोः किमो वा त्रौ द्यौ परे कन्निपात्यः । कत्त्रयः । कत्त्रिः ।

का पथ्यक्षे ॥ २७१ ॥ कोः का भवति पथ्यक्षयोः परतः । कापथः । काक्षः ।

*अल्पे ॥ २७२ ॥ ईषदर्थे कोः का भवति। ईषन्मधुरं--कामधुरं । काकटुकं । कालवणं ।

पुरुषे वा ॥ २७३ ॥कोर्वा का स्यात् पुरुषे परतः । कापुरुषः, कुपुरुषः ।

कवं चोष्णे ॥ २७४ ॥ कोः कवादेशो भवति का च वा उष्णे परे । कवोष्णं । कोष्णं। कदुष्णं ।

×मांस्पाकमांस्पचने ॥ २७५ ॥ मांसस्य पाकपचनयोःपरतःखं वा निपात्यते।मांस्पाकः । मांसपाकः । मांस्पचनं । मांसपचनं ।

×समः खं तते ॥ २७६ ॥ समस्तते परतः खं वा स्यात् । सततं । संततं ।

*स्कुसि ॥ २७७ ॥ समुट्कस्य कृञोऽवयवे सकारे परे समः खं वा भवति।सस्कर्ता।संस्कर्ता। सीति किं ? संचस्कार ।

*सम्तुमोर्मनः कामे ॥ २७८ ॥ सम्तुमोः खं भवति मनसि कामे च परतः । समनाः । सकामः । भोक्तुमनाः । भोक्तुकामः ।

*ड्येऽवश्यमः ॥२७९॥ अवश्यमः खं भवति व्यसंज्ञे परतः । अवश्यकर्तव्यं । अवश्यदेयं ।

*पृषोदरादयः ॥ २८० ॥ पृषोदरप्रकाराः शब्दाः साधवो भवंति। पृषदुदरमस्य पृषोदरः। तद्वदत्र । वारिणो वाहक.—बलाहकः । मह्यां रौति मयूरः । शवानां शयनं–श्मशानं । पिशितमश्नाति पिशाचः । उर्ध्वौ कर्णौ अस्य उलूकः । मेहनस्य खस्य माला मेखला । जीवनस्य मूतः बंधः जीमूतः । उर्ध्वं खमस्य उलूखलं । मुहुः स्वनं लाति मुशलः । दिवि ओको येषां ते दिवौकसः । कौ जीर्यतीति कुंजरः । मह्यां शेते महिषः । बलं बर्द्धयति बलीवर्द्धः । हलस्य ईषा हलीषा । लांगलीषा । कुलान्यटतीति कुलटा । न स्त्री न पुमान् नपुंसकः । नास्मिन्नकं दुःखमस्तीति नाकः । न आप्यतेऽसौ नापितः । न मीयतेऽसौ नमेरुः ।नांतरेण भवतीति नांतरीयकं। शकस्यांधुः शकंधुः । कर्कंधुः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातूनां तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं॥

*दिग्भ्यस्तीरस्य तारः ॥२८१॥ दिग्वाचिभ्यः परस्य तीरस्य तारादेशो भवति । दक्षिणतारं । उत्तरतारं । पूर्वतारं । दिग्भ्य इति किं? गंगातीरं । उत्तरसूत्रस्थवाग्रहणेन सिंहावलोकितन्यायेन दक्षिणतीरमपि स्यात् ।

*स्यिवसायाद्वाऽह्नस्याह्न् कौ ॥२८२॥ स्यिंसखाद् विसायाभ्यां चाह्नस्याह्न् वा स्यात् कौ परतः। द्व्यहनि।द्व्यह्नि।द्व्यह्ने।यावदहनि।यावदह्नि। यावदह्ने । व्यहनि । व्यह्नि । व्यह्ने ।सायाह्नि । सायाह्नि । सायाह्ने ।स्यिविसायादिति किं? पूर्वाह्ने । मध्याह्ने ।

*स्वचिह्नस्याविष्टाष्टपंचभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य दीः कर्णे ॥२८३॥ स्वचिह्नवाचकस्य कर्णे घौ दीर्भवति विष्टादीन् मुक्त्वा । दात्राकर्णः । द्व्यंगुलाकर्णः । शंकूकर्णः । स्वाचिह्नस्येति किं ? शोभनकर्णः । लंबकर्णः । अविष्टादेरिति किं ? विष्टकर्णः । अष्टकर्णः । पंचकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

नहिवृतिवृषिव्यधिरुचिसहितनौ कौ वाग्गे ॥२८४॥ नह्यादिषु क्विंतेषु परेषु वाग्गे घौ दीर्भवति । उपानत् । प्रावृत् । प्रावृट् । मर्माबित् । नीरुक् । जलासट् । परीतत् ।

*हविर्युक्त कपालगवेऽष्टनः ॥ २८५ ॥ अष्टनः कपाले गवे च हविषि युक्तार्थे च दीर्भवति । अष्टाकपालं हविः । अष्टागवं शकटं । हविर्युक्त इति किं ? अष्टकपालः । अष्टगुः ।

*खौ ॥२८६॥ अष्टनः दीर्भवति खौ।अष्टापदः कैलासः । अष्टाचक्रं अष्टाविटपः ।खाविति किं ? अष्टकर्मच्छित जिनः ।

*गिरिवनेऽजनकोटरादेः॥२८७॥गिरिवनयोः परतः अंजनादीनां कोटरादीनां च दीर्भवति खौ। अंजनागिरिः । किंशुलुकागिरिः । कुक्कुटागिरिः। इत्यादि । कोटरावणं । मिश्रकावणं । इत्यादि । अंजनकोटरादेरिति किं ? कृष्णगिरिः । नंदनवनं । खाविति किं ? अंजनगिरिः । कोटरवनं।

*बहुच्शरादीनां मत्यनजिरादेः ॥२८८॥ बह्वचां शरादीनां च मतौ त्ये दीर्भवति अजिरादीस्त्यक्त्वा । उदुंबरावती । मशकावती । पुष्क-

रावती । अमरावती । शरावती । मुनीवती । कपीवती । वंशावती । बहुच्छरादीनामिति किं ? इक्षुमती । मधुमती । अनजिरादेरिति किं ? अजिरवती । खादिरवती ।

चितेः कपि ॥२८९॥ चितेः कपि स्ये दीर्भवति । एकचितीकः। द्विचितीकः । त्रिचितीकः।

*विश्वस्य नरे ॥ २९० ॥ विश्वस्य दीर्भवति नरे परे खौ । विश्वानरः । विश्वनरो राजान्यत्र। नर इति किं ? विश्वसेनः ।

ऋषौ मित्रे ॥२९१ ॥ विश्वस्य मित्रे परे दीर्भवति ऋष्यर्थे खौ । विश्वामित्रः ऋषिः । विश्वमित्रोऽन्यः ।

*वसुराटोः ॥२९२॥ विश्वस्य वसुराटोः परो दीर्भवति । विश्वावसुः। विश्वाराट् । राडिति विकृतनिर्देशादिह न भवति । विश्वराजौ । विश्वराजः ।

*वहेऽपील्वादीकः ॥२९३॥ अपील्वादीनामिकः वहे परतः खौ दीर्भवति । ऋषीवहं । मुनीवहं । अपील्वादीति किं ? पीलुवहं । चारुवहं । इक इति किं ? पिंडवहं ।

गेः काशे ॥२९४॥ गेरिगंतस्य काशे यौ दीर्भवति । नीकाशः । वीकाशः । अनूकाशः । गेरिति किं ? साधुकाशः । इक इत्येव—प्रकाशः

*त्ति ॥२९५॥ दा इत्येतस्मिन् द्वितकारादेशे परतो गेरिगंतस्य दीर्भवति । वीत्तं । नीत्तं । परीत्तं । प्रणीत्त्रिमं । त्तीति किं ? सुदत्तं । इक इति किं ? प्रत्तं । अवत्तं ।

*घञि प्रायः ॥२९६॥ इगंते यौ परतो गेर्दी भवति प्रायः । नीक्लेदः । नीमार्गः । अपामार्गः । प्राकारः । प्रासादः । प्रावारः । कचिन्न स्यात्—विषादः । प्रहारः । प्रकारः । प्रसादः । निषेधः । निशादः । कचिद्विकल्पः । प्रतिहारः । प्रतीहारः ।

बले ॥२९७॥ पूर्वस्य दीर्भवति बलत्ये प्रायः। कृषीबलः । आसुतिवलः ।

*इच्याद् ॥२९८॥ इजंते यौ पूर्वस्याकारादेशो भवति । केशाकेशि । कचाकचि । दंडादंडि । मुशलामुशलि । मुष्टामुष्टि । प्राय इति किं?अस्यसि।

*शुनः ॥२९९॥ शुनःप्रायो दीर्भवति । श्वादंतः । श्वाकर्णः श्वादंष्ट्रा । श्वावराहं । श्वाकुर्द। न चास्ति । श्वमुखः। द्वयमपि । श्वपदं । श्वापदं ।

अन्यस्यापि ॥ ३०० ॥ अन्यस्यापिशब्दस्य याबद्यावपि दीर्भवति । दक्षिणापथः । उत्तरापथः । पूरुषः । नाराकः ।

यौ ॥३०१॥ अचंतौ लुप्तनकाराकारे परतः पूर्वस्य दीर्भवति । प्राचः । प्राचा । प्रतीचः । प्रतीचा । प्राची । प्रतीची । दधीचः । मधूचः। दधीची । मधूची ।

*द्रूखेऽणः ॥३०२॥ द्रोः खं यस्मिन् तत् द्रूखं तस्मिन् द्रूखे पूर्वस्याणो दीर्भवति । लीढं। उपगूढं । अग्नीरथेन याति । इंदूरथमारोहति । नीरक्तं । नीरदः । दूरक्तं । अण इति किं?वृढः ।

सहिवहोऽस्यौः ॥३०३॥ सहिवहोरस्य द्रूखे ओत्वं स्यात् । सोढा । सोढुं । सोढव्यं । वोढा। वोढुंवोढव्यं । अस्येति किं?ऊढः । ऊढवान् ।

इति शब्दार्णवापरनाम्नि जैनेंद्रमहाव्याकरणे शब्दार्णवचंद्रिकायां वृतौ चतुर्थाध्यायस्य तृतीयः पादः । ३॥

## चतुर्थःपादः

गोः ॥ १ ॥ गोरित्ययमधिकारो वेदितव्य आचतुर्थपादपरिसमाप्तेः । वक्ष्यति—केऽणः प्रादेशः । कुमारिका । गोरिति किं ? कुमारीं कामयतीति कुमारीकः ।

*इलो यणिकः ॥ २ ॥ गोरवयवाद्धलः परस्य यणिमंतस्य दीर्भवति । संवीतः । शूनः । आहूतः । जीनः । इल इति किं ? उतः । उतवान् । उतिः । उत्वा । गोरिति किं ? निरुतं । दुरुतं ।

नाम्यतिसृचतसृ ॥३॥ तिसृ चतसृवर्जितस्य गोर्दीर्भवति नामिपरे । सर्वज्ञानां । मुनीनां । साधूनां । नामीति किं ? चर्मणां । अतिसृचतसृ इति किं ? तिसृणां । चतसृणां । गोरिति किं ? क्रिमिणां पश्य । परमनां पश्य ।

नुर्वा ॥ ४ ॥ नुर्नामि परे वा दीर्भवति । नृणां पतिः । नृणां पतिः ।

नोङः ॥ ५ ॥ नकारांतस्य गोरुङो दीर्भवति नामि परतः । पंचानां । सप्तानां । अष्टानां । नवानां ।

घेऽकौ ॥ ६ ॥ किवार्जिते घे नोङो दीर्भवति । धनानि । राजा । राजानौ । राजनः । राजानं । तक्षा । तक्षाणौ । अकाविति किं ? हे राजन् ।

*स्महतोः ॥ ७ ॥ सकारांतस्य महतश्च घेऽकौ नोङो दीर्भवति। श्रेयांसि । यशांसि सर्पींषि । धनूंषि । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसं । श्रेयांसौ । महान् । महांतौ । महांतः । महांतं । महांतौ। अकाविति किं ? हे श्रेयन् । हे महन् ।

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृत्रपां ॥ ८ ॥ स्वस्रादीनां तृजंतानां अपश्च घेऽकौ दीर्भवति । स्वसारौ । स्वसारः । स्वसारं । स्वसारौ। नप्तारौ । नेष्टारौ । । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । वदितारौ जनापवादान् । कर्तारौ । कर्तारः । आपः । स्वांपि तडागानि । नप्त्रादिग्रहणं नियमार्थं । उणादिसिद्धानामेषामेव दीर्नान्येषां । मातरौ । पितरौ । जामातरौ । दुहितरौ ।

इनहन्पूषार्यम्णां शौ ॥ ९ ॥ एषामुङो दीर्भवति शौ परे । बहुदंडीनि । बहुवाग्मीनि कुलानि । बहुभ्रूणहानि । बहुपूषाणि । बह्वर्यमाणि । घेऽकाविति सिद्धे नियमार्थोऽयं योगः । एषां शावेव दीर्नान्यत्र । दंडिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

सौ ॥ १० ॥ इन्नादीनामुङो दीर्भवति सौ परे । दंडी । छत्री । वाग्मी । तपस्वी । वृत्रहा । ब्रह्महा । पूषा । अर्यमा ।

अत्वसोऽभ्वादेः ॥ ११ ॥ अत्वंतस्यासंतस्य चाभ्वादेः सावकौ दीर्भवति । भवान् । गुणवान् । भुक्तवान् । सुपयाः । वेधाः । चंद्रमाः । अभ्वादेरिति किं ? पिंडग्रः । चर्मवः । इषुमस्यास्तीति इष्वः । अकावित्येव-हे भवन् । हे सुपयः ।

ङस्य झलक्ङ्योः किङति ॥१२॥ ङसंज्ञकस्य गोरुङो दीर्भवति झलादौ किङति कौ च परतः। शांतः। शंशांतः। दांतः। ददान्तः। तांतः। तंतांतः । प्रतान् । प्रशान् । प्रदान्। ङस्येति किं ? पक्तिः। झलक्योरिति किं ? शम्यते । दम्यते । किङतीति किं ? यता।

*हन्यचां सनि ॥ १३ ॥ हंतेरिणिगिङादेशस्य गमेरजंतानां च दीर्भवति झलादौ सनि परतः । जिघांसति । जिगांस्यते। अधिजिगांस्यते । अधिजिगांसते । चिचीषति । चिकीर्षति ।

तनो वा ॥ १४ ॥ तनोतेः सनि झलादौ वा दीर्भवति । तितांसति । तितंसति । झलीति किं ? तितनिषति ।

क्रमः क्त्वि ॥१५॥ क्रमः क्त्वि स्ये वा दीर्भवति । क्रंत्वा । क्रांत्वा । झलादावित्येव क्रमित्वा ।

छ्वः शूठ् के च ॥१६॥ छोरछकारवकारयोः

शूठावादेशौ स्तः झसंज्ञे झलादौ किति कौ च परतः । प्रश्नः विश्नः । पृष्टः । पृष्टवान् । पृष्ट्वा । पृष्टिः । शब्दप्राट् । स्योमा । स्यूतः । स्यूतवान् । स्यूत्वा । स्यूतिः । पटस्यूः । यूतः । यूतवान् । यूत्वा । यूतिः । अक्षद्यूः । अक्षद्युवौ, अक्षद्युवः । हिरण्यष्ठूः । हिरण्यष्ठुवौ । हिरण्यष्ठुवः ।

ज्वरत्वरश्रिव्यविमवां वोक्ङोः ॥ १७ ॥ ज्वरादीनां वकारस्योङश्च ऊर्भवति झलादौ कौ च । जूर्तिः । जूः । जुरौ । जुरः । तूर्तिः । तूः । तुरौ । तुरः । तूर्णः । तूर्णवान् । श्रोमा । श्रूतः । श्रूतवान् । श्रूः श्रुवौ । श्रुवः । ऊतिः । ऊः । उवौ । उवः । मूर्तिः । मूः । मुवौ । मुवः ।

रः खं ॥ १८ ॥ रेफात्परयो छ्वोः खं भवति । हुर्छा—हूर्णः । हूर्णवान् । हूः । हुरौ । हुरः । हूर्तिः । मूर्छा—मूः । मुरौ मुरः । मूर्तः । मूर्तवान् । मूर्तिः । तुर्वी—तूर्णः । तूर्णवान् । तूः । तुरौ । तुरः । धुर्वी—धूः । धुरौ । धुरः । धूर्णः । धूर्णवान् । धूर्तिः ।

*ईटीटः ॥ १९ ॥ इटः परस्य ईटि परे अर्थात् सेः खं भवति । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् । ईटीति किं ? अलविषुः । इट इति किं ? अकोषीत् ।

*असिद्धोऽत्राभादयुग्वुक् ॥ २० ॥ असिद्धं भवत्याभाच्छास्त्रं अत्र शास्त्रे युग्वुग्वर्जिते कर्तव्ये । एधि, शाधि इत्यत्र एत्वशाभावयोः कृतयोः झल्लक्षणं धित्वमप्राप्तमसिद्धत्वात् भवति । जहीत्यत्र जभावे कृतेऽतो हेरुप् प्राप्तः असिद्धत्वान्नास्ति । अत्रेति किं ? अभाजि । एपि नखं नासिद्धं । आभादिति किं ? ररंधिव । ररंधिम । एकस्य नुम्नासिद्धं । अयुग्वुगिति किं ? उपादिदीये । बभूव । यणि अवि च कर्तव्ये युग्वुकौ नासिद्धौ ।

श्नान्नः खं ॥ २१ ॥ श्नात्परस्य नकारस्य खं भवति । व्यनक्ति धर्मं । भनक्ति पापं । श्नादिति किं ? नंदनः । सानुबंधग्रहणं किं ? यत्नानां ।

हलुङः क्ङित्यनिदितः ॥ २२ ॥ हलुङो नकारस्य खं भवति अनिदितो गोः क्ङिति परे । ध्वस्तः । ध्वस्तवान् । दनीध्वस्यते । सूस्यते । सनीसूस्यते । हल्ग्रहणं किं ? नीतं । उङ इति किं ? नद्धः । क्ङितीति किं ? ध्वंसित्वा । संसित्वा । अनिदित इति किं ? शंक्यते । शाशंक्यते । मंक्यते । मामंक्यते ।

+कंपलंगोंगविकारोपतापे ॥ २३ ॥ कंपिलंग्योर्नखं भवति अंगविकारोपतापयोः क्ङिति । विकपितः । विलगितः । विकंपितो विलंगितोऽन्यत्र ।

गमहनजनखनघसोऽनाङि ॥ २४ ॥ गमादीनां हलुङः खं भवति क्ङिति अनङ्परे । जग्मतुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जज्ञिरे । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः । अनङीति किं? अगमत् । अघसत् ।

*दंशसंजः शपि ॥ २५ ॥ दंशिसंज्योर्नखं भवति शपि परे । दशति । दशतः । दशंति । सजति । सजतः । सजंति ।

रंजेः ॥ २६ ॥ रंजेर्नकारस्य शपि परतः खं भवति । रजति । रजतः ।

णौ मृगरमणे ॥ २७ ॥ रंजेर्नस्य णौ परे खं स्यात् मृगरमणार्थे । रजयति मृगान् व्याधः । मृगरमण इति किं? रंजयति सभां नटः ।

घञि भावकरणे ॥ २८ ॥ रंजेर्नखं भवति भावे करणे च घञि परतः । रंजनं रज्यतेऽनेन वा रागः । भावकरण इति किं? रंज्यतेऽस्मिन्निति रंगः ।

स्यदो जवे ॥ २९ ॥ स्यंदेर्घञि नखमनप् च निपात्यते जवेऽर्थे । गोस्यदः । अश्वगोस्यदः ।

जव इति किं ? घृतस्यदः ।

* दशनावोदैधौद्मप्रश्रथहिमश्रथाः ॥३०॥ दशनादयो निपात्यंतेऽनकादौ परतः । दशनः । दंशेर्नखं । अवोदः । उंदेर्घञि नखं । एधः । इंधेर्घाञि नखैपौ । औद्मः । उंदेर्मनि नखैपौ । प्रश्रथः । हिमश्रथः । प्रहिमाभ्यां श्रंथेर्घञि नखभेबभावौ निपात्यौ !

नोऽचोऽर्चे ॥३१॥ अंचेः पूजायामर्थे नखं न भवति । अंचितः शांतिनाथः । अंचितवान् । जिनं । अंचित्वा गुरून् गतः । अर्च इति किं ? उदक्तमुदकं कूपात् ।

क्त्वि स्कंदस्यंदोः ॥३२॥ अनयोः क्त्वा परे नखं न स्यात् । स्कंत्त्वा । स्यंत्त्वा । क्त्वीति किं ? प्रस्कद्य । प्रस्यद्य ।

*नशजोर्वा ॥ ३३ ॥ नशेर्जकारांतस्य च क्त्वि परे नखं वा स्यात् । नष्ट्वा । नंष्ट्वा । रक्त्वा रंक्त्वा । भक्त्वा । भंक्त्वा ।

भंजेर्ञौ ॥ ३४ ॥ भंजेर्ञौ परतः नखं वा स्यात् । अभाजि । अभंजि पापं मुनिना ।

*शासोऽङ्हलीत् ॥ ३५ ॥ शासो गोरुङः इद्भवति अङि हलादौ च क्ङिति परतः । आशिषत् । शिष्टः । शिष्टवान् । शिष्ट्वा । शिष्टिः । शिष्वः । शिष्मः । अङ्हलीति किं ? शशासतुः । शशासुः ।

क्वौ ॥ ३६ ॥ शास उङः क्वाविलं स्यात् । आर्यशीः ।

शा हौ ॥ ३७ ॥ शासः शा इत्ययमादेशो भवति हौ परे । प्रशाधि । अनुशाधि ।

हंतेर्जः ॥ ३८ ॥ हंतेर्ज इत्ययमादेशो भवति हौ परतः । जहि मन्युं पापं वा ।

*हन्मन्यम्रम्नम्गम्वनातितनादेर्ङ्खं झलि ॥ ३९ ॥ हनादीनां वनतेस्तनादीनां च झलादौ क्ङिति परे ङखं स्यात् । हतः । हतवान् । हत्वा । हतिः । मतः । मतवान् । मत्वा । मतिः यतः । यतवान् । यत्वा । यतिः । रतः । रतवान् । रत्वा । रतिः । नतः । नतवान् । नत्वा नतिः । गतः । गतवान् । गत्वा । गतिः । वतः । वतवान् । वत्वा । वतिः । ततः । ततवान् । तत्वा । ततिः । क्षतः । क्षतवान् । क्षत्वा । क्षतिः । क्षितः । क्षितवान् । क्षित्वा । क्षितिः । ऋतः । ऋतवान् । ऋत्वा । ऋतिः । तृतः । तृतवान् । तृत्वा । तृतिः । घृतः । घृतवान् । घृत्वा । घृतिः । वतः । वतवान् । वत्वा । वतिः हनादीनामिति किं ? तांतः । दांतः । झलीति किं ? हन्यते । मन्यते ।

प्ये ॥ ४० ॥ हनादीनां प्ये परे ङखं भवति । प्रहत्य । प्रमत्य । प्रतत्य । प्रयत्य । प्रक्षत्य ।

वा मः ॥ ४१ ॥ हनादीनां मांतानां प्ये परे ङखं वा भवति । नियत्य, नियम्य । वियत्य, वियम्य । प्रणत्य, प्रणम्य । आगत्य, आगम्य ॥

*गमादीनां क्वौ ॥ ४२ ॥ एषां ङखं भवति क्वौ परतः । जनगत् । कलिंगगत् । मोक्षगतो मुनयः । संयत् । सुमत् । परीतत् । सुसत् ।

न क्तिचि दीश्च ॥ ४३ ॥ हनादीनां क्तिचि परे ङखं दीश्च न भवति । हन्यादिति हंतिः । मंतिः । यंतिः । रंति । नंतिः । गंतिः । तंतिः ।

वन्याः ॥ ४४ ॥ ङांतस्य गोः वनि परे आत्वं भवति । विजावा । अग्रेगावा, दधिक्रावा ।

जन्सन्खनां ॥ ४५ ॥ एषां ङस्य झलादौ क्ङित्याकारादेशो भवति । जातः । जातवान् । जात्वा । जातिः । सातः सातवान् सात्वा । सातिः । खातः । खातवान् । खात्वा । खातिः ।

सनि ॥ ४६ ॥ जनादीनां सनि झलादौ

आत्वं स्यात् । सिषासति । झलीति किं ? जिजनिषते । सिसनिषति । चिखनिषति ।

ये वा ॥ ४७॥ तेषां यकारे किल्यात्वं वा स्यात् । जायते । जन्यते । जाजायते । जंजन्यते । सायते । सन्यते । सासायते । संसन्यते खायते । खन्यते । चाखायते । चंखन्यते ।

तनेर्यकि ॥ ४८ ॥ तनोतेर्यकि आत्वं वा स्यात् । तायते । तन्यते ।

सनः क्तिचि खं च ॥४९॥ सनः खमात्वं वा स्यात् क्तिचि परतः।सतिः सातिः संतिः ।

अगे ॥ ५० ॥ अगे इत्ययमधिकारो ज्ञेयः। वक्ष्यति–हलो यः । बेभिदिता । चेच्छिदिता । अग इति किं ? बेभिद्यते । चेच्छिद्यते ।

*भ्रस्जरसोऽर् ॥ ५१ ॥भ्रस्जेः फेसकारयोरगेऽर् भवति वा। भ्रष्टा । भर्ष्टा । भ्रष्टुं । भर्ष्टुं भर्ष्टव्यं । भ्रष्टव्यं । भर्जनं । भ्रज्जनं । भर्गःभ्रज्जः

*दरिद्रः खं लुङि ॥ ५२ ॥ दरिद्रातेः खं वा स्यात् लुङि परतः ।अदरिद्रात्।अदरिद्रासात्

असन्वुण्ण्वनटं ॥ ५३ ॥ दरिद्रातेरगे खं स्यात् सकारादिसनं वुणं ण्वुं अनटं च विहाय दरिद्यात् । दरिद्यते । असन्वुण्वने इति किं ? दिदरिद्रासति । दरिद्रायको व्रजति । दरिद्रायकः । दरिद्राणं । सकारादिविशेषणं सनः किं ? दिदरिद्रिषति ज्ञापकमिदमेव दरिद्रातेः सनीड्विकल्पस्य ।

हलो यः ॥ ५४ ॥ हलः परस्य यकारस्य खं भवत्यगे परतः । बेभिदिता । बेभिदितुं । बेभिदितव्यं । मरीमृजिता । मरीमृजकः । हल इति किं ? कंडूयिता । लोलूयिता ।

वा क्यः ॥ ५५ ॥ हलः क्यच्क्यङोः खं वा स्यात् अगे परतः । समिधिता। समिध्यिता । समिधितुं । समिध्यितुं । दृषदिता । दृषयिता । दृषदितुं । दृषयितुं । दृषदितव्यं । दृषयितव्यं ।

*अतः ॥ ५६ ॥ अकारांतस्य खं भवत्यगे परतः । चिकीर्षिता । चिकीर्षितुं । चिकीर्षितव्यं । प्रचिकीर्ष्य ।

णेः ॥ ५७ ॥ णेः खं भवत्यगे परतः । अततक्षत् । कार्यते । कारणं । कारकः ।

ते सेटि ॥ ५८ ॥ तसंज्ञके सेटि परे णेः खं भवति अगे परतः । कारितः । कारितवान् । हारितः । हारितवान् । गणितं । लक्षितं । नियमार्थोऽयं योगः त एव सेटि नान्यस्मिन् । कारयिता । हारयिता ।

*नामंताल्वाय्येत्नौ ॥ ५९ ॥ आमादिषु परतो णेः खं न स्यात् । कारयांचकार । हारयांचकार । गंडयंतः । मंडयंतः । स्पृहयालुः । महयाय्यः । स्तनयित्नुः । गदयित्नुः ।

प्येऽय् धिपूर्वात् ॥ ६० ॥ धिपूर्वाद्वर्णाद् परस्य णेरयादेशो भवति प्ये परतः प्रकथय्य । प्रशमय्य । प्रबेभिदय्य । प्य इति किं ? प्रबेभिदितः । धिपूर्वादिति किं ? प्रतिपाद्य गतः ।

वाऽऽपः ॥ ६१ ॥ आपः परस्य णेरय् भवति वा प्ये परे । प्रापय्य । प्राप्य ।

क्षेर्दीः ॥ ६२ ॥ क्षेः प्ये परे दीर्भवति । प्रक्षीय । परिक्षीय ।

तेऽण्ये ॥ ६३ ॥ अण्यार्थे तसंज्ञे क्षेर्दीर्भवति । क्षीणो देवदत्तः । अक्षीणो यज्ञदत्तः । अण्य इति किं ? क्षितमस्य ।

वा दैन्याक्रोशे ॥ ६४ ॥ क्षेर्वा दीर्भवति दैन्ये आक्रोशे च तेऽण्ये परतः । क्षितोऽयं । क्षीणोऽयं । क्षितोऽसि जाल्म । क्षीणोऽसि जाल्म ।

*सिस्यसीयुट्तासां कौ ग्रहाज्हनदृशो ञिट् ॥

॥ ६५ ॥ ग्रहेरजंतेभ्यो हनदृशभ्यां च परेषां स्यादीनां कावर्थे भिङ् वा स्यात् । अग्राहिषातां । अग्रहीषातां । ग्राहिष्यते । ग्रहीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । अग्लायिषातां । अग्लासातां । ग्लायिष्यते । ग्लास्यते । ग्लायिषीष्ट । ग्लासीष्ट । ग्लायिता । ग्लाता । अचायिषातां । अचेषातां । अस्ताविषातां । अस्तोषातां । चायिष्यते । चेष्यते । स्ताविष्यते । स्तोष्यते । अघानिषातां । अहसातां । अवधिषातां । घानिष्यते । हनिष्यते । घानिषीष्ट । वधिषीष्ट । घानिता । हंता । अदर्शिषातां । अदृक्षातां । दर्शिष्यते । द्रक्ष्यते । दर्शिषीष्ट । द्रक्षीष्ट । दर्शिता । द्रष्टा । स्यादीनामिति किं ? ददे दानं । लवितव्यः केदारः । काविति किं ? लविष्यति केदारं । पविष्यति यवराशिं । ग्रहादिग्रहणं किं ? पक्ष्यते ओदनः ।

दीङोऽचि क्ङिति युक् ॥६६॥ दीङः क्ङित्यजादौ परे युगागमो भवति । उपदिदीयेषे । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । अचीति किं ? उपदीयते । क्ङितीति किं ? उपदानं ।

इटि चात्खं ॥ ६७ ॥ इट्यजादौ च क्ङित्यगे परे आकारांतस्य खं भवति । पपिथ । जग्लिथ । पपतुः । पपुः । आहृत् । प्रपा ।

ईद्ये ॥ ६८ ॥ आकारांतस्य ये परे ईत्वं भवति । देयं । धेयं । स्थेयं ।

घुमास्थागापाहाक्सां हलि ॥ ६९ ॥ एषां हलादौ क्ङिति ईद् भवति । दीयते । देदीयते । धीयते । देधीयते । धीतं वत्सेन । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । गीतः । गीतवान् । पीयते । पेपीयते । पीतं । पीतवान् । पीत्वा । हीयते । हीनः । हीनवान् । अवसीयते । अवसेषीयते । हलीति किं ? ददतुः ।

लिङ्येत् ॥ ७० ॥ घ्वादीनामेद्भवति लिङि परे । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् ।

वाऽन्यः स्फादेः ॥ ७१ ॥ आकारांतस्य स्फादेः स्थाहीनस्य लिङ्येद्वा स्यात् । ग्लेयात् । ग्लायात् । म्लेयात् । म्लायात् । स्नेयात् । स्नायात् । अस्थ इति किं ? स्थेयात् । स्फादेरिति किं ? पायात् ।

न ल्ये ॥ ७२ ॥ घ्वादीनामीत्वं न स्यात् ल्ये परे । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । अवहाय । अवसाय ।

वेर्मेङः ॥ ७३ ॥ मेङः ल्ये इत्वं वा स्यात् । अपमित्य । अपमाय ।

*लुङ्लङ्लृङ्क्ष्वमाकाऽट् ॥ ७४ ॥ गोरडागमो भवति लुङादिषु परतः माङ्योगं विहाय । अकार्षीत् । अकरोत् । अकरिष्यत् । अहार्षीत् । अहरत् । अहारिष्यत् । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यते । औब्जीत् । औब्जत् । औब्जिष्यत् । अमाका इति किं ? मा हार्षीत् । मा भवान् कार्षीत् । मा स्म करोत् । मेक्षिष्ट । मा स्मेक्षत । मोब्जीत् । मानिरसीत् । मास्म निरटीत् । मासानिरटत् । अग इति निवृत्तं ।

*हल्श्नुधुभ्रुवोऽचीयुव्योः ॥ ७५ ॥ एषां इवर्णोवर्णयोरियुवौ स्तः अजादौ परे । प्राप्नुवंति । शक्नुवंति । चिक्षियतुः । चिक्षियुः । तुष्टुवतुः । तुष्टुवुः । भ्रुवौ । भ्रुवः । हल्श्न इति किं ? चिन्वंति । सुन्वंति । अचीति किं ? नीः । लूः ।

यरयास्वे ॥ ७६ ॥ यस्य य्वोः इयुवौ स्तः असेऽचि परतः । इयर्ति । इयर्त्तः । इयूति । इयेष । उवोष । अस्व इति किं ? ईषतुः । ईषुः । ऊषतुः । ऊषुः ।

**स्त्रियाः** ॥ ७७ ॥ स्त्रीशब्दस्येय् भवत्यचि परतः । स्त्रियौ । स्त्रियः ।

**वाऽम्शसोः** ॥७८॥ स्त्रिया वा इय् भवति अम्शसोः परतः। स्त्रियं । स्त्रीं । स्त्रियः। स्त्रीः।

**औतः** ॥ ७९ ॥ ओतः आकारो भवति अम्शसोः परतः । गां । गाः । द्यां । द्याः ।

***यणिणः** ॥ ८० ॥ इणोऽचि यण् भवति । यंति । यंतु । यन् ।

**×वेकः** ॥ ८१॥ इको यण् वा भवति अचि परतः।अधीयंति । अधियंति । अधीयन्।अधियन्।

**एर्गिवाक्चादुङोऽसुधियः** ॥८२ ॥ गिवाक्चाद् परस्माद् उङः परस्य इवर्णस्य यण् भवत्यचि सुधीशब्दं त्यक्त्वा । सुन्यौ । सुन्यः। परिण्यौ । परिण्यः।ग्रामण्यौ । ग्रामण्यः । सेनान्यौ । सेनान्यः । चिच्ये । चिच्याते । निन्युः । निन्युः । गिवाक्चादिति किं ? नियौ । नियः । उङः इति किं ? यवक्रियौ । असुधिय इति किं ? सुधियौ । सुधियः ।

**सुप्योः** ॥ ८३ ॥ गिवाक्चादुङः परस्योवर्णस्य सुप्यजादौ परे यण् भवति । सुल्वौ । सुल्वः।खलप्वः।सुपीति किं ? लुलुवतुः।लुलुवुः ।

**दृन्करपुनर्वर्षाभ्यो भ्वः** ॥ ८४ ॥ एभ्यो भवतेर्यण् भवति अजादौ सुपि परे । दृन्भ्वौ । दृन्भ्वः। करभ्वौ । करभ्वः। पुनर्भ्वौ। पुनर्भ्वः। वर्षाभ्वौ । वर्षाभ्वः। नियमोऽयं—एभ्य एव भ्वो यण् भवति नान्यस्मात्।स्वयंभुवौ।स्वयंभुवः ।

**लुङ्लिटोर्वुक्** ॥ ८५ ॥ भुवो वुक् भवति लुङ्लिटोरचि परे । अभूवम्। अभूवन् । बभूव । बभूवतुः ।

**होर्गे वः** ॥ ८६ ॥ होरुकारस्य वकारादेशो भवत्यजादौ गे परतः। जुह्वतु । ग इति किं ? जुहुवतुः । जुहुवुः ।

**गोहेरुदुङः** ॥ ८७ ॥ गोहेरुदुङः ऊद् भवति अचि परतः । निगूहते । निगूहयति । निगूहकः । साधुनिगूही । निगूहं निगूहं निगूहो वर्तते । गूहति । उपगूहकः । गोहेरिति विकृतनिर्देशः,किं?निजुगुह। निजुगूहतुः,। अचीतिकिं ? निगोढा । निगोढुं । निगोढव्यं ।

**दोषो णौ** ॥८८॥ दोषः उङो णौ परतः ऊद् भवति । दूषयति । दूषयतः । दूषयंति । णौ इति किं?दोषः ।

**वा चित्ते** ॥८९॥ दोषो णावुङःऊद्वा स्यात् चित्तार्थे । चित्तं दूषयति चित्तं दोषयति । प्रज्ञां दोषयति । प्रज्ञां दूषयति । चित्त इति किं?एकांतवादप्रयोगं दूषयति ।

*** घटादिकगेवनुजनीजूष्स्नस्क्नस्रंज्यमोऽपर्यपस्खलत्कम्चम्यमः प्रोऽमुञ्योस्तु दीर्वा** ॥ ९० ॥ पर्यपपूर्वस्खदिवर्जितानां घटादीनां कगेवनुजनीजूष्स्नस्क्नस्रंजीनां अमंतानां च कम्चम्यामिवर्जितानां चोङः प्रो भवति णौ अमुञिपरे तु दीर्वा । घटयति । घटंघटं । घाटंघाटं । अघटि । अघाटि । व्यथयति । व्यथंव्यथं । व्याथंव्याथं । अव्यथि । अव्याथि । कगयति । कगंकगं । कागंकागं । अकगि । अकागि । वनयति । वनंवनं । वानंवानं । अवनि । अवानि । जनयति । जनंजनं । जानंजानं । अजनि । अजानि । जरयति । जरंजरं । जारंजारं । अजरि । अजारि । स्नसयति । स्नसं स्नसं । स्नासं । स्नासं । अस्नसि । अस्नासि । क्नसयति । क्नसंक्नसं । क्नासं क्नासं । अक्नसि । अक्नासि । रजयति । रजं रजं । राजं राजं । अरजि । अराजि । गमयति । गमंगमं । गामंगामं । अगमि अगामि । दमयति । दमंदमं । दामंदामं । अदमि । अदामि । अप-

येपस्खत्कमुचमुयम इति किं ? परिस्खादयति । परिस्खादं । परिस्खादं परिस्खादं । पर्यस्खादि । अपस्खादयति । अपस्खादमपस्खादं । अपास्खादि । कामयते । कामं कामं । अकामि । आचामयति । आचाममाचामं । आचामि । आयामयति । आयाममायामं । आयामि । पर्यपपूर्व इति किं ? स्खदयति ।

*शमोऽदर्शे ॥ ९१॥ शमः प्रो भवत्यदर्शेऽर्थे णौ अमुञ्योस्तु दीर्घा । शमयति रागं । शमंशमं। शामंशामं । अशमि । अशामि । अदर्श इति किं ? निशामयति रूपं ।

*यमोऽपरिवेषे स्वार्थे च ॥ ९२ ॥ यमेरपरिवेषेऽर्थे स्वार्थे च णौ प्रो भवत्यमुञ्योस्तु दीर्घा। यमयति । यमं यमं । यामं यामं । अयमि । अयामि । अपरिवेषे इति किं ? यामयत्यतिथीन्। णावित्येवास्य सिद्धे स्वार्थे चेति वचनं ज्ञापकमन्येषां स्वार्थे णिचि प्रो न भवतीति । स्यमै वितर्के--स्यामयते ।

*मारणतोषणनिशाने ज्ञश्च ॥ ९३ ॥ मारणादिष्वर्थेषु जानातेः स्वार्थे च णौ परतः प्रो भवत्यमञ्योस्तु दीर्घा । संज्ञपयति मृगान् व्याधः । ज्ञपयति गुरुं शिष्यः । ज्ञपयति शरान् । तीक्ष्णीकरोति । स्वार्थे चेति समुच्चयार्थश्चशब्दः ।

*चहः शाठ्ये ॥ ९४ ॥ चहः शाठ्येऽर्थे स्वार्थे णौ प्रादेशो भवत्यमञ्योस्तु दीर्घा । चहयति। चहं चहं । चाहं चाहं । अचहि । अचाहि। शाठ्य इति किं ? चहं चहं । अचहि । कथादिष्वंतर्गतत्वादेव चहयतीति सिद्धं वचनं तु दीत्वार्थं ।

*वाऽगेर्ज्वलह्वलह्मलनमग्लास्नावनुवमाम् ॥ ९५ ॥ ज्वलादीनामगिपूर्वाणां प्रो वा स्यात् णौ परतः । ज्वलयति । ज्वालयति । ह्वलयति, ह्वालयति।ह्मलयति, ह्मालयति।नमयति, नामयति। ग्लपयति, ग्लापयति । स्नपयति, स्नापयति । वनयति, वानयति । वमयति, वामयति।अगेरिति किं ? प्रज्वालयति । प्रग्लापयति । प्रस्नापयति ।

खचि ॥९६॥ खचि परे णौ प्रो भवत्युकः । युगंधरः । वसुंधरा । पुरंदरः ।

ह्लादस्ते ॥ ९७ ॥ ह्लादः प्रादेशो भवति तसंज्ञके परे । प्रह्लन्नः । प्रह्लन्नवान् । त इति किं ? प्रह्लादयति ।

×क्त्योः ॥ ९८ ॥ क्विक्त्योः परतः ह्लादेः प्रो भवति । प्रह्लत्तिः ।

*छादेर्घेऽद्व्यादिगेः ॥९९॥ छादेरुकः प्रो भवति घत्ये परे द्व्यादिगीन् विहाय । छदः । प्रच्छदः । उरश्छदः । शिरश्छदः । तनुच्छदः । अद्व्यादिगेरिति किं?समुपच्छादः।समुपाभिच्छादः।

*मन्क्वौ ॥१००॥ छादेः प्रो भवति मन्क्वौ च परतः । छदः । प्रच्छद् । उपच्छद् ।

*झलहोर्हेर्धिः ॥१०१॥ झलंतात् होश्चोत्तरस्य हेर्धिर्भवति । विद्धि। छिन्द्धि । जुहुधि । झलहोरिति किं ? याहि ।

ञेरुप् ॥१०२॥ ञेः परस्य तस्योप् भवति। अभायि । अस्तावि । अकारि ।

अतो हेः॥१०३॥अकारांतात्परस्य हेरुब्भवति । भव । दीव्य । कुप । अत इति किं ? स्तुहि । पाहि । हेरिति किं ? जीवतात् त्वं ।

*उतोऽस्फात् ॥ १०४ ॥ अस्फात्परो यः उकारांतस्तदंताद्धेरुप् भवति। सुनु । चिनु। कुरु । उत इति किं ? जानीहि । अस्फादिति किं ? अक्ष्णुहि । प्राप्नुहि ।

वा म्वोः खं ॥१०५॥ अस्फादुतः खं वा स्यात् मकारवकारयोः परतः । सुन्मः,

सुनुमः । सुन्वः, सुनुवः । सुन्महे, सुनुमहे । तन्मः, तनुमः । तन्वः, तनुवः । तन्वहे, तनुवहे । तन्महे, तनुमहे ।

*कुर्वि च ॥१०६॥ कुञः परस्यातः खं भवति यकारादौ म्वोश्च परतः । कुर्यात् । कुर्य्यातां । कुर्युः । कुर्वः । कुर्मः । कुर्वहे । कुर्महे । यि चेति किं ? कुरुतः ।

*गेऽतः क्ङित्युत् ॥१०७॥ कृञोऽत उद्भवति गे क्ङिति परतः । कुरुथः । कुर्वंति । क्ङितीति किं ? करोमि ।

श्नऽसः खं ॥१०८॥ श्नसः अस्तेश्चातः खं स्यात् वा गे क्ङिति परतः । रुंधंति । स्वः । स्मः । स्थः । स्तः । संति । क्ङितीति किं ? रुणध्मि । अस्मि । असि । अस्ति ।

श्नाभ्यस्तयोरातः ॥१०९॥ श्नाभ्यस्तयोराकारस्य खं भवति गे क्ङिति परतः । संजिहते । मिमते । मिमतां । क्रीणंति । क्रीणते । लुनंति । लुनते । श्नाभ्यस्तयोरिति किं ? यांति । आत इति किं ? बिभ्रति ।

इस्यभोरीः ॥ ११० ॥ भुसंज्ञकवर्जितस्य अस्य श्ना इत्येतस्य च ईत्वं स्यात् हलादौ क्ङिति परतः । मिमीवहे । मिमीमहे । मिमीषे । मिमीध्वे । मिमीते । लुनीवः । लुनीमः । लुनीतः । हलीति किं ? मिमते । लुनति । अभोरिति किं ? दद्वः । दद्मः । दध्वः । दध्मः ।

इद् दरिद्रः ॥१११॥ दरिद्रातेरात इत्वं स्यात् हलादौ क्ङिति गे परतः । दरिद्रिवः । दरिद्रिमः । दरिद्रिथः । दरिद्रितः । दरिद्रियात् ।

भियो वा ॥११२॥ बिभेतेर्वा इद् भवति हलादौ क्ङिति गे परतः । बिभिवः । बिभीवः । बिभिमः । बिभीमः । बिभिथः । बिभीथः । बिभितः । बिभीतः । बिभियात् । बिभीयात् । ग इति किं ? भीतः । भीमके ।

हाकः ॥११३॥ ओहाको वा इत्वं भवति हलि क्ङिति गे परतः । जहिवः । जहीवः । जहिमः । जहीमः । जहिथः । जहीथः । जहितः । जहीतः ।

आ च हौ ॥११४॥ हाको हौ परे आत्वं भवति इच्च वा । जहाहि, जहिहि, जहीहि ।

यि खं ॥११५॥ हाकः खं भवति यकारादौ गे क्ङिति परतः । जह्यात् । जह्यातां । जह्युः ।

*घ्वसो रेच्चखे ॥११६॥ घुसंज्ञानामस्तेश्च हकारादौ हौ परे एत्वं स्यात् तस्य चस्य च खं । देहि । धेहि । एधि । हकारादाविति किं ? दद्यात् । धत्तात् । स्तात् ।

* हल्मध्ये लिट्यतः ॥ ११७ ॥ हलोर्मध्ये वर्तमानस्यातः एत्वखे स्तः क्ङिति परतः । नेमतुः । नेमुः । पेचतुः । पेचुः । शेकतुः । शेकुः । हल्मध्य इति किं ? आटतुः । आटुः । अत इति किं ? दिदिवतुः । दिदिवुः । तकारः किं ? शशासतुः । शशासुः ।

सेटि ॥ ११८ ॥ सेटि लिटि परतः हल्मध्ये वर्तमानस्यातः एत्वखे स्तः । येमिथ । पेचिथ । शेकिथ । सेटीति किं ? पपक्थ ।

फलभजोः ॥ ११९ ॥ फलभजोरेत्वखे स्तः क्ङिति लिटि सेटि च परतः । फेलतुः । फेलिथ । भेजतुः । भेजिथ । भेजे । भेजाते । भेजिरे । नियमार्थोऽयं योगः । एतयोरेव आदेशाद्योरेत्वखे नान्यस्य । चकणतुः । चकणुः । चकणिथ । जगदतुः । जगदिथ । उवसिथ । इयजिथ ।

त्रप्त्रोः ॥ १२० ॥ त्रपतरत्योर्लिट्येत्वखे स्तः । त्रेपे । त्रेपाते । त्रेपिरे । तेरतुः । तेरुः । तेरिथ । इदमपि नियमार्थ—अनेकहल्मध्यगतस्यातः त्रपेरेव एत्वनिवृत्तस्यातः तरतेरेव नान्यस्य । ततक्षतुः । ततक्षिथ । सस्ररतुः । सस्ररिथ । विश-

शरतुः । विशशरिथ । चकरतुः । चकरिथ ।

बधे राधेः ॥ १२१ ॥ बधेऽर्थे राधेर्लिड्येचखे स्तः । रेधतुः । रेधुः । रेधिथ । बध इति किं ? आरराधतुः ।

*न शाद्गदद्ववादेः ॥ १२२ ॥ शसददवादीनां च लिट्येचखे न स्तः । विशशसतुः । विशशसुः । विशशसिथ । ददते । ददाते । ददिरे । ववणतुः । ववणुः । ववणिथ । ववले । ववलाते । ववलिरे । ववसे । ववसाते । ववसिरे ।

*वा भ्रम्वम्त्रसजाम् ॥ १२३ ॥ भ्रमादीनां लिट्येचखे वा स्तः । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । वेमतुः । वेमुः । वेमिथ । ववमतुः । ववमुः । ववमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रमेरादेशादित्वाद् वमेर्वादित्वात् त्रसेरनेकहल्त्वात् जॄष एपनिर्वृत्ताकारत्वादप्राप्तेर्विकल्पः ।

*फणां ॥ १२४ ॥ फणादीनां सप्तानामेचखे वा स्तः क्ङिति लिटि सेटि च परतः । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेसे । भ्रेसाते । भ्रेसिरे । बभ्रासे । बभ्रासाते । बभ्रासिरे । भ्लेसे । भ्लेसाते । भ्लेसिरे । बभ्लासे । बभ्लासाते । बभ्लासिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ ।

*श्रंथिग्रंथेर्नखं च ॥ १२५ ॥ श्रंथिग्रंथ्योः क्ङिति लिटि सेटि च परतः एचखे वा स्तः नखं च । श्रेथतुः । श्रेथुः । श्रेथिथ । शश्रंथतुः । शश्रंथुः । शश्रंथिथ । ग्रेथतुः । ग्रेथुः । ग्रेथिथ । जग्रंथतुः । जग्रंथुः । जग्रंथिथ ।

*दंभेः ॥ १२६ ॥ दंभेः क्ङिति लिट्येचखे स्तः नखं च । देभतुः । देभुः ।

*थे वा ॥१२७॥ दंभेरेचखे स्तः नखं च थे परे वा । देभिथ । ददंभिथ ।

× पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्चाधे ॥ १२८ ॥ पादादीनां पदादयो भवंत्यधे सुपि वा । पदा, पादेन । दद्भिः । दंतैः । नसा । नासिकया । मासि । मासे । हृदि । हृदये । निशि, निशायां । अस्ना, असृजा । यूष्णा, यूषेण । दोष्णा, दोषा । यक्ना, यकृता । शक्ना, शकृता । उद्ना, उदकेन । आसनि, आसने । अध इति किं ? पादः ।

ॠनञोऽर्वणोऽसौ ॥१२९॥ अनञ अर्वणः तृभावो भवत्यसौ सुपि परे । अर्वतौ । अर्वतः । अर्वत्सु । अनञ इति किं ? अनर्वाणौ । । असाविति किं ? अर्वा ।

भस्य ॥ १३० ॥ भस्येत्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

पादः पद् ॥ १३१ ॥ पादांतस्य भस्य पदादेशो भवति । द्विपदः पश्य । द्विपदा । द्विपदी । त्रिपदः । त्रिपदा । त्रिपदे । त्रिपदी । चतुष्पदः । चतुष्पदी । व्याघ्रपदः । व्याघ्रपदी । वैयाघ्रपद्यः । भस्येति किं ? द्विपादौ । द्विपादः ।

* वसोर्वस्योश् ॥ १३२ ॥ भस्य वसोर्वकारस्योश् भवति । विदुषः पश्य । विदुषा । विदुषी । पेचुषः । पेचुषा । पेचुषे । पेचुषी ।

श्वयुवन्मघोनोऽहृति ॥ १३३ ॥ श्वादीनां वस्योश् भवति अहृति परे । शुनः । शुना । शुने । शुनी । यूनः । यूना । यूने । यूनी स्त्री । मघोनः । मघोना । [illegible] किं ?

शुनो विकारः शौवं मांसं । यूनो भावः–यौवनं वर्त्तते । मघोन इदं–माघवनं रूपं ।

अनोऽस्वमन्वस्फाद् ॥ १३४ ॥ अन्नंतस्य भस्याकारस्य खं भवति मकारवकारांतात् परं मुक्त्वा । राज्ञः पश्य । राज्ञा । राज्ञी । अम्व-स्फादिति किं ? अश्मनः । वर्मणः । पर्वणः । तत्त्वदृश्वनः ।

षन्हन्धृतराज्ञोऽणि ॥ १३५ ॥ षन्हन् इत्येतदंतस्यानःधृतराज्ञश्चाखं भवत्यणि परे भस्य । पूष्णोऽपत्यं पौष्णः । ताक्ष्णः । भ्रूणघ्नोऽपत्यं भौणघ्नः । वार्त्तघ्नः। धृतराज्ञोऽपत्यं–धार्त्तराज्ञः ।

वा ङिश्योः ॥ १३६ ॥ अनोऽकारस्य खं वा स्यात् ङौ शींशब्दे च परे भस्य । राज्ञि । राजनि । लोम्नि । लोमनि । लोम्नी । लोमनी । दाम्नी । दामनी ।

अचः ॥ १३७ ॥ अंचेर्लुप्तनकारस्य खं भवति । प्रतीचः। प्रतीचा । प्रतीची । दधीचः । दधीचा । दधीची । मधूचः-मधूचा । मधूची । अच इति किं ? साध्वंचः । साध्वंचा ।

ईदुदः ॥ १३८ ॥ उदः परस्याच ईत्त्वं स्यात् । उदीचः । उदीचा । उदीची ।

*आतोऽनापः ॥ १३९॥ आप्वर्जितस्यातः भस्य खं भवति । कीलालपः पश्य । कीला-लपा । कीलालपे । शुभंयः पश्य । शुभया । टःक्त्वः । अनाप इति किं ? मालाः कुरु ।

*ङिति टेः ॥ १४० ॥ टिसंज्ञकस्य खं भवति ङिति परे । मुनौ । साधौ ।

*हृति विंशतेस्तेः ॥ १४१ ॥ विंशतेर्भस्य यस्तिशब्दस्तस्य डिति ह्रीत खं स्यात् । विंशतेः पूरणः विंशः । विंशं शतं । हृतीति किं ? विंशती ।

*नः ॥ १४२ ॥ नकारांतस्य टेः खं भवति हृति परतः । आग्निशर्मिः । दैवशर्मिः । औमिः । औडुलोमिः ।

×ञ्ञेः प्रायः ॥ १४३ ॥ भिसंज्ञकस्य टेः खं भवति हृति परतः । स्वर्भवः सौवः । बहिर्भवो बाह्यः । अकस्माद् भवः-आकस्मिकः । पौनः-पुन्यं । न चास्ति–शाश्वतिकः । शाश्वतं । आरातीयः ।

सब्रह्मचर्यादेः ॥ १४४ ॥ एषां टेः खं भवति हृति परतः । सब्रह्मचारिणः शिष्यः साब्रह्मचारः । पीठसमर्प्पिणोऽयं–पैठसमर्प्पः । शिलालिन इमे शैलालाः । शैखंडाः । सुपर्वण इमे सौपर्वाः ।

*श्वचर्मणः संकोचकोशे ॥ १४५ ॥ श्वच-र्मणोः संकोचे कोशे चार्थे टेः खं स्यात् हृति परतः । शुनोऽयं शौवः संकोचः। चर्मणो विकारः चार्मः कोशः।संकोचकोश इति किं ? शौवनः । चार्मणः ।

*वाऽश्महितनाम्नो विकारापत्ये ॥१४६॥ अश्मन् हितनामन्नित्येतयोः विकारेऽपत्ये चार्थे वा टिखं भवति हृति परतः । अश्मनो विकारः आश्मः । आश्मनः । हितनाम्नोऽपत्यं हैतनामः । हैतनामनः । अन्यत्र–आश्मनः । हैतनामनः ।

*टखेऽह्नः ॥ १४७ ॥ अन्हऽट खयोरेव टेः खं भवति । उत्तमाहः । द्वे अहनी भूतो भावी वा द्व्यहीनः । त्र्यह्णीनः । टख इति किं ? अन्हा निर्वृत्तमाह्निकं ।

कद्र्वोरोऽस्वयंभुवः ॥ १४८ ॥ कद्रूशब्दस्य उवर्णांतस्य च स्वयंभूवर्जितस्य ओत्वं भवति हृति परतः । कद्र्वाः अपत्यं काद्रवेयः । मंडो-रपत्यं मांडव्यः । औपगवः । कापटवः । अस्व-यंभुव इति किं ? स्वयंभुव इदं स्वायंभुवं ।

ढे खं ॥ १४९ ॥ उवर्णांतस्य खं भवति ढे परे । मद्रबाह्वाः अपत्यं माद्रबाहेवः । जंब्वा अपत्यं जांबेयः ।

*एः ॥ १५० ॥ अवर्णांतस्य च भस्य खं भवति ह्रति परे । दाक्षिः । चौडिः । नाभेयः । रौहिणेयः । कमंडलेयः ।

ङ्यां ॥ १५१ ॥ अवर्णेवर्णयोः खं भवति ङीत्ये परतः।गौरी।कुमारी।कुरुचरी। । दाक्षी । प्लाक्षी।

*मत्स्योङ्यः ॥१५२॥ मत्स्यस्योङो यकारस्य खं भवति ङ्या परतः । मत्सी ।

सूर्यागस्त्ययोश्छे च ॥१५३॥ अनयोरुङो यकारस्य खं भवति ङ्यां छे च परतः । सूर्य्यस्य भार्या सूरी । अगस्ती । सौरीयः । आगस्तीयः । छे चेति किं ? सौर्यं तेजः ।

हलो ह्रतः ॥१५४॥ हलः परस्य ह्रतो यकारस्य खं भवति ङ्यां परतः । गार्गी । वात्सी । हल इति किं ? वायुवेगी । ह्रत इति किं ? ऋश्यी ।

क्यच्व्यनाद्ह्रत्यापत्यस्य ॥ १५५ ॥ क्ये च्वौ अनकारादौ च ह्रति हलः परस्यापत्यस्य यकारस्य खं भवति । गार्गीयति । गार्गायते । वात्सीयति । वात्सायते । गार्गीभूतः। वात्सीभूतः। गर्गाणां समूहः गार्गकं । वात्सकं । वात्सस्यायं वात्सीयः । गार्गीयः । क्यच्व्यनादिति किं ? गार्ग्यायणः । वात्स्यायनः । आपत्यस्येति किं ? सांकाश्ये भवः सांकाश्यकः । कांपिल्यकः । हल इत्येव—आत्रेयकः ।

राजन्यमनुष्यस्याके ॥ १५६ ॥ राजन्य मनुष्ययोर्यकारस्य खं नास्त्यके परतः । राजन्यानां समूहः राजन्यकं । मानुष्यकं ।

*तैषपौषं भे ॥ १५७ ॥ तिष्यपुष्ययोर्यकारस्य खं निपात्यते नक्षत्रविषये । तिष्येण गुरूदयेन युक्तः तैषः । पौषः । भ इति किं ? तिष्यो देवताऽस्य तैष्यः । पौष्यः ।

*वांऽतमांतितमांतितोंतियांतिषद् ॥१५८॥ अंतमादयः शब्दाः कृततिकादिनाशा वा निपात्यंते । अतिशयेनांतिकः अंतमः । अंतितमः । अंतिकतमः। तमेंऽतिकम्य तिशब्दस्य कशब्दस्य च खं निपात्यते। अंतिकादागतः अंतितः । अंतिकतः । तसि वा कोप् । अंतिके साधुः अंतियः । अंतिक्यः । यः कोप् । अंतिके सीदतीत्यंतिषद् । अतिकसद् । क्विंते सदि कखषत्वे वा स्तः ।

*बिल्वकादेश्छस्य ॥ १५९॥ बिल्वकादीनां छकारस्य खं भवति ह्रति परतः। बिल्वाः अस्यां संति बिल्वकीया नदी । तस्यां भवः बैल्वकः । वैणुकीया । वैणुकः । वैत्रकीया । वैत्रकः । त्रिकीया । त्रैकः ।

तुरिष्ठेमेयस्सु ॥ १६० ॥ तृशब्दस्य खं स्यात् इष्ठ इमनीयसौ परतः । आतिशयेन कर्तृमान् करिष्ठः । हरिष्ठः । करीयान् । हरीयान् । इमन्ग्रहणमुत्तरार्थं ।

टेः ॥ १६१ ॥ टेश्च खं भवति इष्ठेमेयस्सु परतः । पटिष्ठः । पटोर्भावः पटिमा । पटीयान्। लघिष्ठः । लघिमा । लघीयान् ।

णाविष्ठवन्मृदः ॥ १६२ ॥ मृदः इष्ठे इव कार्यं भवति णौ परतः । पटुमाचष्टे—पटयति । लघयति । साधुमाचष्टे—साधयति । नदयति । कर्तृमंतं—करयति । हर्तृमंतं—हरयति ।

स्थूलदूरयुवह्रस्वाक्षिप्रक्षुद्राणां यण एप् चेकः ॥ १६३ ॥ स्थूलादीनां यणः खं भवति इक एप् च इष्ठेमेयस्सु परतः । स्थविष्ठः । स्थविमा । स्थवीयान् । दविष्ठः । दविमा । दवीयान् । यविष्ठः। यविमा । यवीयान् । ह्रसिष्ठः ।

ह्रसिमा । ह्रसीयान् । क्षपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । स्थूलमाचष्टे—स्थवयति । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति ।

**प्रियस्थिरस्फिरायादेरः ॥ १६४ ॥** प्रियादीनामिकारादेर्वर्णसंघातस्यात्त्वं स्यादिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान् । स्थेष्ठः स्थेमा । स्थेयान् । स्फेष्ठः । स्फेमाः स्फेयान् । प्रापयति । स्थापयति ।

**बहुलगुरूरुवृद्धतृप्रदीर्घवृंदारकाणां बंहिगर्ववर्षित्रप्द्राघवृंदाः ॥ १६५ ॥** बहुलादीनां बंह्यादयो भवति इष्ठेमेयस्सु परतः । बंहिष्ठः । बंहिमा । बंहीयान् । गरिष्ठः । गरिमा गरीयान् । वरिष्ठः । वरिमा । वरीयान् । वर्षिष्ठः । वर्षिमा । वर्षीयान् । त्रपिष्ठः । त्रपिमा । त्रपीयान् । द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृंदिष्ठः । वृंदिमा । वृंदीयान् । बंहयति । गरयति । इत्यादि ।

**बहोर्भ्वस्मात्खं ॥ १६६ ॥** बहोर्भूभावो भवति अस्माच्चेमेयसोरादेः खं । बहोर्भावः—भूमा । अतिशयेन बहुः भूयान् ।

*भूयिष्ठे ॥ १६७ ॥ बहोर्भूयादेशो भवतीष्ठे परतः । भूयिष्ठः ।

*ज्यायान् ॥ १६८ ॥ प्रशस्यस्य वृद्धस्य वा ज्यादेशात्परस्येयसोरात्त्वं निपात्यं । अतिशयेन प्रशस्यः वृद्धो वा ज्यायान् । ज्यायांसौ । ज्यायांसः । ज्यायसी । ज्यायः ।

***रः पृथुमृदुकृशभृशदृढपरिवृढस्योः ॥ १६९ ॥** पृथ्वादीनां ऋकारस्य रेफादेशो भवतीष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथिमा । प्रथीयान् । म्रदिष्ठः म्रदिमा । म्रदीयान् । क्रशिष्ठः । क्रशिमा । क्रशीयान् । भ्रशिष्ठः । भ्रशिमा । भ्रशीयान् । द्रढिष्ठः । द्रढिमा । द्रढीयान् । परिव्रढिष्ठः । परिव्रढिमा । परिव्रढीयान् । प्रथयति । म्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादेरिति किं ? ऋजिष्ठः । ऋजिमा । ऋजीयान् । ऋजयति । कृष्णिष्ठः कृष्णिमा । कृष्णीयान् । कृष्णयति ।

**नैकाचः ॥ १७० ॥** एकाचः टिखं न भवतीष्ठेमेयस्सु परतः । अतिशयेन त्वग्वान्—त्वचिष्ठः त्वग्वतो भावः—त्वचिमा । त्वचीयान् । त्वग्वंतमाचष्टे—त्वचयति । स्रजिष्ठः स्रजिमा । स्रजीयान् । स्रजयति । एकाच इति किं ? अतिशयेन वसुमान् वसिष्ठः ।

**अनपत्येऽणीनः ॥ १७१ ॥** इन्नंतस्यानपत्यार्थे अणि परे टिखं न स्यात् । समंततः कुटनं सांकोटिनं । सांराविणं । सांमार्जिनं । गुणिन इदं गौणिनं । दांडिनं । छात्रिणं । अनपत्यं इति किं ? बाहुबलिनोऽपत्यं बाहुबलः ।

**गाथिविदथिकेशिपाणिगणिस्फादेः ॥ १७२ ॥** गाथ्यादीनां स्फादेश्चेनो यदुक्तं तन्न भवत्यणि परे । गाथिनोऽपत्यं गाथिनः । वैदाथिनः । कैशिनः । पाणिनः । गाणिनः । शाङ्गिणः । माद्रिणः चाक्रिणः ।

***म्नोऽवर्मणः ॥ १७३ ॥** मन्नंतस्यावर्मणोऽनपत्य एवाणि यदुक्तं तन्न स्यात् । चर्मणा छन्नःचार्मणो रथः । साम देवता अस्य—सामनः वेम्न इदं वैमनं । अनपत्य इति किं ? सुषाम्नोऽपत्यं—सौषामः । अवर्मण इति किं ? सौवर्णवर्मणः । हैरण्यवर्मणः ।

**ब्राह्मं ॥ १७४ ॥** ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्रह्मणोऽयं—ब्राह्मो मंत्रः । ब्राह्ममस्त्रं ।

**जातौ ॥ १७५ ॥** जात्यर्थे ब्रह्मणोऽनपत्यऽणि टिखं निपात्यं । ब्राह्मी औषधिः । अनपत्य

इति किं ? ब्रह्मणोऽपत्यं ब्राह्मणः ।

*औक्षं ॥ १७६ ॥ उक्ष्णोऽनपत्येऽणि टिखं निपात्यते । उक्ष्ण इदं—औक्षं पदं । अनपत्य इति किं ? उक्ष्णोऽपत्यं—औक्ष्णः ।

अनः ॥ १७७ ॥ अन्नंतस्याणि यदुक्तं तन्न स्यात् । सुत्वनोऽपत्यं सौत्वनः । याज्वनः । कर्मणो विकारः-कार्मणः ।

येऽङ्गौ ॥ १७८ ॥ अङ्गावर्थे येऽनो यदुक्तं तन्न स्यात् । सामनि साधुः—सामन्यः । वेमन्यः । मूर्धनि भवः मूर्द्धन्यः । राज्ञोऽपत्यं—राजन्यः । अङ्गाविति किं ? राज्ञो भावः कर्म वा—राज्यं ।

खेऽध्वनः ॥ १७९ ॥ अध्वनः खे परतः टिखं न भवति । अध्वानमलंगामी—अध्वनीनः ।

*ठाकेऽथर्वयूनः ॥ १८० ॥ अथर्वन् युव न्नित्येतयोर्यदुक्तं तन्न स्यात् ठाकयोः परतः । अथर्वाणं वेत्त्यधीते वा आथर्वणिकः । यूनो भावो यौवनिका । ठाक इति किं ? अथर्वणोऽयं आथर्वः । युवा प्रयोजनमस्य—यौविकं ।

दंडिहस्तिनोः फे ॥ १८१ ॥ एतयोः फत्ये टिखं न भवति । दंडिनोऽपत्यं-दांडिनायनः । हास्तिनायनः ।

वासिजिह्मासिनःफिढे ॥१८२॥ एतयोः फौ ढे च परे टिखं न भवति । वासिनोऽपत्यं—वासिनायनिः । जैह्मासिनेयः ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयं ॥१८३॥ भ्रौणहत्यादयो निपात्यंते । भ्रूणहन् धीवन् इत्येतयोष्ट्यणि तत्वं निपात्यं । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्यं । धैवत्यं । सारवं भवः सारवं जलं । सरयूशब्दस्यायूखमणिपरे । इक्ष्वाकोरपत्यं ऐक्ष्वाकः । अन्युखं । मित्रयोरपत्यं—मैत्रेयः । ढञि योः खं । हिरण्यस्य विकारः हिरण्मयं जिनगृहं । मयटि यखं ।

÷शीर्षन् शिरसोऽभ्ये यि ॥१८४॥ शिरसः शीर्षन् भवति प्यमुक्ते यत्ये इति परे । शिरसि भवः-शीर्षण्यः स्वरः । अभ्य इति किं ? हास्तिशीर्ष्या ।

÷वा केशे ॥ १८५॥ शिरसः केशार्थे शीर्षन् वा भवति यत्ये परतः । शीर्षण्याः शिरस्याः केशाः ।

÷शीर्षोऽचि ॥ १८६ ॥ शिरसऽशीर्षादेशो भवति अजादौ इति परतः । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । स्थूलशिरस इदं स्थौलशीर्षं । अचीति किं ? शिरस्कल्पं । इतीति किं ? शिरसा नमामि शांतिनाथं ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां
लघुवृत्तौ चतुर्थाध्यायस्य
चतुर्थः पादः ।
समाप्तश्चायमध्यायः ॥४॥

---

# अथ पंचमोऽध्यायः ।

*वोरकः ॥ १ ॥ वोर्गुनिमित्तभूतस्य अक इत्ययमादेशो भवति । नंदकः । वर्द्धकः । कारकः । आगकः ।

*फढखछघ आयनेयीनीयियः ॥ २ ॥ फादीनां निरचां गुनिमित्तानामायनादयो भवंति । नडादिभ्यः फण्—नाडायनः । ढण् दितेश्च—दैतेयः । कुलात् खः—कुलीनः । स्वसुश्छः—स्वस्रीयः । क्षत्राद् घः—क्षत्रियः । गुनिमित्तानामिति किं ? फक्कति । ढौकते । खनति । छिनाति । घूर्णते ।

झोऽन्तः ॥३॥ झकारस्यांता देशो भवति । भवंति । एधंते । अदंति । दीव्यंति । गोर्निमित्त-

स्येति किं ? उज्झन् । उज्झिता ।

थादत् ॥ ४ ॥ थात्परस्य झस्य अद् भवति। ददति । ददतु । जाग्रति । जाग्रतु ।

देऽनतः ॥ ५ ॥ दविषयेऽनतः परस्य झस्याद् भवति । चिन्वते । चिन्वतां । अचिन्वन् । विक्रीणते । द इति किं ? पुनंति । अनत इति किं ? च्यवंते । उत्लवंते ।

* शीङो रट् ॥ ६ ॥ शीङः परस्य झो रट् भवति । शेरते । शेरतां । अशेरत ।

वेत्तेः सिद्धसेनस्य ॥ ७ ॥ वेत्तेः परस्य झो रट् भवति दे सिद्धसेनस्याचार्यस्य मतेन । संविद्रते । संविद्रतां । समविद्रत । संविदते । संविदतां । समविदत ।

भिसोऽत ऐस् ॥ ८ ॥ अकारांतात् भिस ऐस् भवति । जिनैः । सुरैः । असुरैः । नरैः । अत इति किं ? यतिभिः । विद्याभिः । ऐस्करणादतिजरसैः ।

* नेदमदसोऽकः ॥ ९ ॥ आभ्यां ककाररहिताभ्यां भिस ऐस् न स्यात् । एभिः।अमीभिः। अक इति किं ? इमकैः । अमुकैः ।

स्येनात्ङ्स्टाङसेः ॥१०॥ अतो ङसादीनां स्यादयो भवंति । जिनस्य । जिनेन । जिनात् । अतिजरसेन । आत्करणात्–अतिजरसात् ।

ङेर्य्यः॥ ११ ॥ अतो ङेर्यो भवति। देवाय। जिनाय । दानाय ।

स्नेः स्मैः ॥ १२ ॥ स्नेः परस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । अन्यस्मै । तस्मै । यस्मै । कस्मै । अस्मै । अत इति किं ? भवते ।

* ङ्यसेः स्मिन्स्मात् ॥ १३ ॥स्नेरकारांतात्परयोर्ङिङस्योः स्मिन्स्मातौ स्तः । सर्वस्मिन् । सर्वस्मात् । विश्वस्मिन्।विश्वस्मात्। अन्यस्मिन् । अन्यस्मात्।तस्मिन् । तस्मात्।यस्मिन् । यस्मात् । कस्मिन्। कस्मात् ।

जसः शी ॥ १४ ॥ स्नेरकारांतात्परस्य जसः शी इत्ययमादेशो भवति। सर्वे । विश्वे। अन्ये । ये । ते । के ।

आप औतः ॥ १५ ॥ आबंतात्परस्यौतः शी भवति । कन्ये पश्य। दामे तिष्ठतः। दामे पश्य।

नपः ॥ १६॥ नपः परस्य औतः शी भवति। दधिनी स्तः । दधिनी पश्य । पापे स्तः । पापे त्यज । फले । धने । वने । कुले । माले ।

जस्शसोः शिः ॥ १७ ॥ नपः परयोः जस्शसोः शिर्भवति । ज्ञानानि संति। ज्ञानान्याश्रय। एवं–दधीनि । मधूनि । कुलानि । मालानि । जसा सहचरितस्य शसो ग्रहणादिह नेष्यते—पात्रशो ददाति । वनशः प्रविशति ।

*अष्ट औश्॥१८॥अष्टन्शब्दाद् कृताकारात् परयोर्जस्शसोः औश् भवति । अष्टौ यांति । अष्टौ पश्य।कृताकारपरिग्रहादिह न भवति । अष्ट तिष्ठंति ।अष्ट पश्य । ज्ञापकमिदमेवात्वाविकल्पस्यप्रधानसंप्रत्ययादिह न भवति। प्रियाष्टानस्तिष्ठंति। प्रियाष्टनः पश्य। ओशा सिद्धेऽप्यौश्ग्रहणमष्टावाचक्षते अष्टयतीति क्विबंतेऽपि श्रवणार्थमष्टाविति ।

उबिलः॥ १९ ॥ इल्संज्ञकात् जस्शसोः उप् भवति । षट् । पंच । सप्त । अष्ट । नव। दश कति संति वीक्षस्व वा । प्रधाने कार्यसंप्रत्ययादिह न भवति । प्रियषषः प्रियपंचानः तिष्ठंति । प्रियकतीन् पश्य ।

नपः स्वमोः ॥ २० ॥ नपः स्वमोरुप् भवति। दध्यस्ति। दधि पश्य। एवं– त्रपु । जतु । मधु । उदश्वित् । यत्कुलं, तत्कुलमित्यत्र कृताकृतप्रसंगादानित्यं त्यदाद्यत्वं बाधते । यस्य च लक्षणांतरेणाम्भावेन निमित्तं विहन्यते न तदनित्यमिति ।

